# उत्तररामचरितम्।





## महाकविश्रीभवभूतिप्रणीतम्।



बि, ए, उपाधिधारिणा पण्डितकुलपतिना

**श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण**

विरचितया व्याख्यया समलङ्कृतम्

तेनैव संस्कृतं प्रकाशितञ्च।

तृतीय संस्करणम्।

**कलिकातानगर्य्याम्।**

**सिद्धेश्वरयन्त्रे**

मुद्रितम्।

ई १८९५।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

*PANDIT JIBANANDA VIDYASAGARA B, A.*

*Superintendent Free Sanskrit College, Calcutta.*

# उत्तररामचरितम्।

## प्रथमोऽङ्कः।

इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे।
विन्देम देवतां वाचममृतामात्मनः कलाम्॥ १॥

---

विश्वं शश्वच्छरीरं गुणकृतिविततं यस्य चानन्तशक्तेः
सत्यं वै यस्य रूपं ह्यनुभवसुभगं योगिनां योगदृश्यम्।
व्याप्तं सर्वत्र सृष्टिस्थितिलयगुणको निर्गुणो योऽगुणत्वाद्
यावान् यश्चिंश्च योऽहं कृतिमयवपुषा संस्थितः सोऽहमास्ते॥
कर्मप्रसूतिः प्रभवः फलानां न तस्य कर्त्ता ह्यपरोऽस्ति मत्तः।
अतो मयाऽस्मिन्नहमेव वन्द्यः प्रभुत्वमात्मामपि मे प्रकृत्याम्॥
छात्राणां सुखबोधार्थं श्रीजीवानन्दशर्मणा।
क्रियते विस्तृता व्याख्या नाम्ना च सुखबोधिनी॥

(१) आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखमिति शास्त्रादात्मनश्च वन्दनीयत्वादपरिच्छिन्नस्यापि तस्य वाङ्मात्रसिद्धिप्रयोजनतया वाङ्मात्रावच्छेदेनैव आत्मानं नमस्कृत्य वाक्सिद्धिं प्रार्थयते। इदमिति। पूर्वेभ्यः प्राचीनेभ्यः वाल्मीक्यादिभ्यः कविगुरुभ्यः, यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तत्त्वमसि श्वेतकेतो इति, स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमान इत्यादि च श्रुतेः। "ब्रह्माणं वाल्मीकिं विदुः" इति, कृष्णद्वैपायनं विद्धि व्यासं नारायणं प्रभुमिति च स्मृत्यादौ दर्शनात् तेषाम-प्यात्मनोऽभ्रूपत्वादिति भावः। नम इति वाको वाको वाक्येतिहासेत्यादि छान्दोग्ये, वचो घञिति छान्दसोऽयं प्रयोगः। वाक्यं यस्मिंस्तत्तथोक्तं यद्वा नमः नमःशब्दस्य वाकः उच्चारणं यस्मिन् प्रशास्महे इति क्रियाविशेषणमेतत्, त्वयमित्यूह्यम्। इदं वक्ष्यमाणं प्रशास्महे प्रार्थयामहे। किमिदमित्याह, आत्मनः परमात्मनः कलांशभूताममृतां सत्यत्वाद्रसवत्त्वात् निरतिशयसुखहेतुत्वाच्च वेद-

नान्द्यन्ते * सूत्रधारः † ।

अलमतिविस्तरेण * * । अद्य खलु भगवतः कालप्रियनाथस्य † † यात्रायाम् (क) आर्य्यमिश्रान् (ख) विज्ञापयामि,

---

यदनन्तकालव्यापिनीं वाचं वाग्रूपां देवतां, काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च। शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मन इति विष्णुपुराणवाक्यात् शब्दमय्या वाण्या कामधेन्वादितन्त्रोक्तवाक्याच्च वर्णमय्या अपि वाण्या देवतात्वमवगम्यते। विन्देम लभेमहीति। विदधातोर्विधिलिङ्। पूर्व्वेभ्यः कविभ्यो नमस्कारपूर्वकं वयमिदं प्रार्थयामहे यत्तेषां प्रसादात् तदीया रसभावमयी निखिललोकमनोहारिणी वाक् अस्य ग्रन्थस्य प्रणयने अस्माकं सहायभूता भवत्वित्यर्थः। अस्य प्रस्तावस्य वाल्मीक्यादिकविवाक्यमूलकत्वात्तेभ्य इयं प्रार्थनेति भावः। वृत्तमनुष्टुप्। अथवा पूर्व्वेभ्यः कविभ्यो नमः तेषां काव्येषु पथप्रदर्शकत्वात्, वा अथवा किं तेभ्यो नमस्कारेण, वयं कम् आत्मानं विष्णुं वा, कवेर्वाक्सिद्धिप्रयोजनत्वाद् वाचश्च तदंशत्वादिति भावः। इदं प्रयास्महे प्रार्थयामहे यदात्मनः विष्णोर्वा कलाम् अमृतां देवतां वाचं विन्देम इति। अन्यथा अस्य काव्यस्यासम्भवत्वादिति भावः।

* नन्दन्ति प्रसीदन्ति देवता यत्र सा नान्दी। तथाहि, देवद्विजनृपादीनामाशीर्वादपरायणा। नन्दन्ति देवता यस्मात्तस्मान्नान्दीति कीर्त्तितेत्यलङ्कारवाक्यम्। सा च सूत्रधारेण कर्त्तव्या।

† सूत्रं प्रस्तावनां धारयति प्रवर्त्तयतीति सूत्रधारः नाटकस्थापको नटः। तथाहि, वर्त्तनीयतया सूत्रं प्रथमं येन सूच्यते। रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते इति साहित्यदर्पणम्।

* * अतिविस्तरेण अलं वाग्बाहुल्यं निष्प्रयोजनमिति भावः। अलं भूषणपर्य्याप्तिशक्तिवारणवाचकम् इत्यमरः।

† † उज्जयिनीस्थितस्य कालप्रियनाथस्य महाकाल इत्यपराख्यस्य च शिवमूर्त्तेरित्यर्थः। यद्वाजधान्युज्जयनी महापुरी सदा महाकालमहेशयोगिनीति, महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकमित्यादि च दर्शनात्। अस्य देवमूर्त्तेः प्रतिष्ठास्थानमपि महाकालशब्देनोच्यते, प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान् पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालामित्याद्यारभ्य, पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्येति, अप्यन्यस्मिन् जलधर महाकालमासाद्य काले इति च तट्टीकायां, महाकालं नाम पूर्वोक्तचण्डीश्वरस्थानमिति च दर्शनात् ग्रन्थोक्तकाल-

एवमत्रभवन्तो विदांकुर्वन्तु (ग)। अस्ति खलु तत्रभवान् काश्यपः (घ) श्रीकण्ठपदलाञ्छनो (ङ) भवभूतिर्नाम।

यं ब्राह्मणमियं देवी वाग् वश्येवानुवर्त्तते।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते॥ २॥

---

प्रियनाथस्यैव नामान्तरं महाकाल इति तत्प्रतिष्ठास्थानञ्च महाकालशब्देनोक्त-मित्यनुमन्यामहे। Consult this :—अपरस्थानेन महाकविना स्वाधिष्ठान-विज्ञापनार्थं महावीरचरिते दक्षिणापथान्तर्वर्त्ति पद्मपुरनगरस्य निर्देशात् पद्मपुरस्य चावन्तीसान्निध्यात् तदुक्ता कालिदासोक्ता च शिवमूर्त्तिरेकैवेत्यनुमानम्। उज्ज-यिनी स्याद्विशालाऽवन्ती पुष्पकरण्डिनीति च विशालावन्त्युज्जयन्यश्च एकार्थप्रति-पादिकाः।

(क) यान्यत्र जनौघा इति, याधातोस्तन्। कालप्रियनाथोत्सवे जन-समागमे मिलितसभायाम् इत्यर्थः।

(ख) आर्य्यमिश्रान् पूज्यतमान्, कर्त्तव्यमाचरन् कामकर्त्तव्यमना-चरन्। तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृत इति, स्यादुत्तरपदे मिश्र-स्त्रिषु श्रेष्ठार्थवाचक इति दर्शनात्। कालप्रियनाथोत्सवे समागतान् पूज्यतमान् रसास्वादनिपुणान् पण्डितान् ( Lords and gentlemen ) विज्ञापयामि इत्यर्थः।

(ग) अत्रभवन्तः पूज्यतमा उदाराशयाः। त्रिषु तत्रभवान् पूज्यस्तथैवात्र-भवानिति वैजयन्ती। एवमिदम् इत्यर्थः विदांकुर्वन्तु जानन्तु।

(घ) काश्यपः कश्यपगोत्रोद्भवः। ब्रह्मणो मानसपुत्रो मरीचिस्तत्पुत्रः कश्यपः तद्वंशजः काश्यपः कश्चित् मुनिविशेषः स आदिपुरुषो यस्य सोऽपि काश्यपः।

(ङ) श्रीः सरस्वती कण्ठे यस्य स तथोक्त इति पदमुपाधिर्लाञ्छनं विशेषकं यस्य स तथोक्तः श्रीकण्ठोपाधिक इत्यर्थः। शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते इति कोषः।

(२) ब्राह्मणं यं भवभूतिम् इयं सुप्रतिष्ठिता वाग्देवी वश्या वशीकृता अभिप्रायानुसारिणी रमणीव अनुगच्छति इङ्गितमात्रेणैवाभिमतं साधयति इत्यर्थः। वाचि तस्यैतादृशी प्रभुता यत् कवेरभिलाषमात्रेणैव सा दुरूहतमातिनिगूढमनिर्व-चनीयमपि रसभावं यथागतं प्रबन्धादिषु प्रवर्त्तयति इति भावः। एवं वश्यवाचा

एषोऽहं कार्य्यवशादायोध्यिकस्तदानीन्तनश्च संवृत्तः (च)। [ समन्तादवलोक्य। ] भो! भो! यदि तावदत्रभवतः पौलस्त्य-कुलधूमकेतोः (छ) महाराजरामस्य अयम् अभिषेकसमयो रात्रिन्दिवमसंहृतानन्दनान्दीकः तत् किमिति विश्रान्तचारणानि चत्वरस्थानानि (ज)।

---

तेन श्रीकण्ठभवभूतिना महाकविना प्रणीतम् उत्तरं रामचरितं, शिक्षोपनयन-ताड़कावधवनप्रस्थानरावणनिधनादि पूर्वचरितं विहाय रामस्य उत्तरचरिता-नामभिनयनादुत्तररामचरितमित्यस्य नाटकस्य आख्या। नाटकत्वञ्चास्य, नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्। पञ्चादिका दशपरास्तत्राङ्काः परि-कीर्त्तिताः॥ इत्यादि साहित्यदर्पणोक्तसूत्रेणोपयुज्यते। प्रयोक्ष्यते अभिनेष्यते अवस्थानुकरणादिना सम्पाद्यते अस्माभिरिति शेषः। अभिनयश्च अङ्गैर्वचनैर्वेश-भूषादिभिः रसप्रकाशकसुखरागादिभिश्च क्रियते। उक्तञ्च, भवेदभिनयोऽव-स्थानुकारः, स चतुर्विधः। आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथेति। वृत्तमनुष्टुप्।

(च) एष सूत्रधारोऽहं कार्य्यवशात् प्रयोगानुष्ठानानुरोधाद्धेतोः अन्यत आगतोऽपि अयोध्यायां भवः इति आयोध्यिकः अयोध्यावासी इत्यर्थः तदानीन्तनश्च इदानीन्तनोऽपि रामसमकालिकश्च संवृत्तः सञ्जातः अन्यथा प्रयोगस्यासम्भवादिति भावः।

(छ) पुलस्त्यस्य ब्रह्मणो मानसपुत्रस्य दशानां प्रजापतीनामन्यतमस्य कस्यचित् मुनिविशेषस्य अपत्यं पुमानिति पौलस्त्यो रावणस्तस्य कुलं वंशस्तस्य धूम-केतुः धूमकेतुरिव प्रलयकारणं तस्य तथोक्तस्य दशाननकुलान्तकस्य इत्यर्थः।

(ज) रात्रिश्च दिवा चेति रात्रिन्दिवम्। समाहारे त्वेकवचनं क्लीव-लिङ्गता च, व्याप्त्यर्थे अत्यन्तसंयोगे वा द्वितीया। असंहृताः अविश्रान्ताः आनन्दयन्ति इति आनन्दाः आनन्दजनिकाः नान्द्यः प्रसादनक्रियाः मङ्गलाचर-णादीनीति यावत् यस्मिन् अभिषेकसमये स तथोक्तः, समयविशेषणमेतत्। अवि-श्रान्तानन्दलहरीक इत्यर्थः। विश्रान्ताः निरुद्यमाः अभिनयादिव्यापाराभावात् तूष्णीम्भूता इत्यर्थः चारयन्ति प्रथयन्ति कीर्त्तिमिति चारणाः नटास्ते येषु तानि तथोक्तानि चत्वरस्थानानि रङ्गप्राङ्गणानि। (चत+ष्वरच् इत्युणादिसूत्रम्, चत्—याचना तस्मात् उदन्प्रत्ययान्ताच्चतुरिति शब्दो व्युत्पाद्यते। चत्+याच्

[ प्रविश्य नटः । ] भाव ! प्रेषिता हि इतः स्वगृहात् महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गराक्षसाः, सभाजनोपस्थायिनो नानादिगन्तागता ब्रह्मर्षयो राजर्षयश्च, यदाराधनाय एतावतो दिवसान् उत्सव आसीत् (क)।

---

+उर्—भ्रमणं उर् गताविति सौत्रम्। याच्ञार्थं हि जनाः चतुर्दिक्षु भ्रमन्तीति धातुद्वययोगाच्चतुरिति शब्दो व्युत्पाद्यते। L. Quatour इति संस्कृतं चतुरित्येकधातुमूलकमेवेति मन्यन्ते। ततः चतुर्+ड्वरच्—चत्वर—Eng. Quartu. L. Quartarius. It. Quartiere. Pr. Quartier. Sp. Cuartel. Ger. Quartier. D. Kwartier. Dan. Quarteer. Sw. Quarter. All derived most probably from Quartour चतुर् meaning four, चत्वर meant perhaps originally a fourth part or portion hence a division of a house or locality yard a principal division for याग an open place &c. while चतुर means room for an elephant; one who has his eyes towards four sides or every side hence expert, cunning, dexterous दक्ष, what is seen at every side that which is before the eyes. See Dictiomary for the meanings of Quarter.

(क) भावेति सूत्रधारसम्बोधनम्। भावयति स्थापयति प्रयोगमिति भावः सूत्रधारः। सूत्रधारं वदेद्भावमिति च साहित्यदर्पणे। प्रेषिताः स्वस्थानप्रतिगमनार्थमनुमता यथासत्कारं प्रेरिताश्च। इतः अस्या अयोध्याया इत्यर्थः। प्लवन्तः सन्तो गच्छन्तीति प्लवङ्गाः वानराः उपलक्षणात् भल्लुका अपि सुग्रीवहनुमज्जाम्बवदादयः राक्षसाः विभीषणादयः। Perhaps रूक्षः, रक्षः and राक्षसः are all derived from the same root. रूक्षः स्नेहशून्यः कठोरः रक्षः ( रक्ष्यते हविः अस्मादिति ) रक्ष+असुन् रक्षांस्येव राक्षसाः स्वार्थे अण्। सभाजनार्थम् अभिषिच्यमानस्य रामस्य सम्माननार्थम् उपहारादिभिः समुपस्थिताः नानादिशामन्तात् प्रान्तात् नानादिग्भ्य इत्यर्थः अयोध्यामागताः। स्वभावे च स्वरूपे च अन्तं प्रोक्तं पुमानपि। नाशे प्रान्ते च सीमायां निश्चयेऽवयवे पुमानिति कोषः। ब्रह्माणश्च ते ऋषयश्चेति ब्रह्मर्षयः, राजानश्च ते ऋषयश्चेति

अन्यच्च ।

वशिष्ठाधिष्ठिता देव्यो गता राघवमातरः ।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम् ॥ ३ ॥

सूत्र । वैदेशिकोऽस्मीति पृच्छामि कः पुनरसौ जामाता ?

नटः । कन्यां दशरथो राजा शान्तां नाम व्यजीजनत् ।
अपत्यकृतिकां राज्ञे लोमपादाय यां ददौ ॥ ४ ॥

विभाण्डकसुतस्तां ऋष्यशृङ्ग उपयेमे, तेन च साम्प्रतं द्वादशवार्षिकं सत्रमारब्धं, तदनुरोधात् कठोरगर्भामपि वधूं जानकीं विमुच्य गुरुजनस्तत्र गत इति (ञ) ।

---

राजर्षयः उभयत्रापि कर्मधारयः । ब्राह्मणा ऋषयः वशिष्ठाद्याः, क्षत्रिया ऋषयः जनकविश्वामित्राद्याः इति द्विविधा ऋषयो निमन्त्रिता आसन् ।

( ३ ) वशिष्ठेति । वशिष्ठेन तन्नाम्ना रघुकुलगुरुणा अधिष्ठिताः अधिकारित्वेन स्थित्वा नीयमानाः Headed or Presided by Vasishtha. देव्यो राघवमातरः कौशल्यादिकाः अरुन्धतीं वशिष्ठपत्नीं पुरस्कृत्य अग्रे कृत्वा यज्ञे यज्ञोत्सवे जामातुराश्रमं गताः ।

( ४ ) कन्यामिति । राजा दशरथः शान्तां नाम कन्यां दुहितरं व्यजीजनत् उत्पादयामास । अपत्यकृतिकां कृत्रिमपुत्रिकास्वरूपां स्मृत्यादिशास्त्रानुसारेण पश्चात् लोमपादेन राज्ञा दत्तकपुत्रिकात्वेन गृहीतामिति यावत् यां कन्यां राज्ञे राजर्षये लोमपादाय ददौ दत्तवान् । राजा दशरथः स्वतनयां शान्तां राज्ञे लोमपादाय पुत्रिकास्वरूपेण ग्रहणार्थं ददावित्यर्थः । अत्र रामायणम् । अपुत्त्रस्त्वङ्गराजो वै लोमपाद इति श्रुतः । स राजानं दशरथं प्रार्थयिष्यति भूमिपः । अनपत्योऽस्मि मे कन्यां सखे ! दातुं त्वमर्हसि । शान्तां शान्तेन मनसा कन्यार्थं वरवर्णिनीम् । श्रुत्वा दशरथो वाक्यं प्रकृत्या करुणात्मकः । दास्यते तां तदा कन्यां स राजा विगतज्वरः । स्वपुरं यास्यति प्रीतः कृतार्थेनान्तरात्मनेति । तां कन्यामृष्यशृङ्गाय प्रदास्यति स पार्थिवः । ऋष्यशृङ्गोऽपि च प्रीतो लब्ध्वा भार्य्यां भविष्यतीति । १ । १० ।

( ञ ) (पश्चात्) विभाण्डकस्य मुनेः सुतः पुत्रः ऋष्यशृङ्गस्तां कन्यां शान्ताम्

सूत्र। तत् किमनेन एहि राजद्वारमेव स्वजातिसमयेन उपतिष्ठावः (ट)। गच्छाव:

नटः। तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थान-स्तोत्रपद्धतिं भावः (ठ)।

सूत्र। मारिष! (ड)। आर्य!

सर्वथा व्यवहर्त्तव्ये कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥५॥

---

उपयेमे उदवोढ परिणीतवान्। तेन च ऋष्यशृङ्गेण द्वादशवार्षिकं द्वादशवर्ष-साध्यं सत्रं यज्ञः आरब्धम् उपक्रान्तम्। तस्य आरब्धयज्ञस्य ऋष्यशृङ्गस्य अनुरोधात् अभिलाषात् प्रार्थनाया इति यावत् कठोरः पूर्णो गर्भो यस्याः सा तथोक्तामपि वधूं जानकीं विमुच्य त्यक्त्वा गुरुजनः कौशल्यादिस्तत्र तदीययज्ञस्थाने गतः।

(ट) तदिति। तत् तदा अनेन वृथाकालहरणेनेत्यर्थः किम्? न किमपि प्रयोजनमिति भावः। तत् किमन्येनेति पाठे यद्येवं तदन्येन अन्य-कार्येण राजसमीपगमनादन्यकार्य्येणेत्यर्थः किं प्रयोजनम्। एहि आगच्छ स्वजातिसमयेन अस्माकं जातिधर्मेण जात्याचारस्तुतिपाठादिकमेणैवेत्यर्थः। समयाः शपथाचारकालसिद्धान्तसंविद इत्यमरः। राजद्वारमेव उपतिष्ठावः गच्छावः।

(ठ) सुपरिशुद्धां सर्वथा दोषरहिताम् उपस्थानस्य उपासनायाः या स्तोत्र-पद्धतिः स्तुतिप्रणाली तां नृपोचितस्तोत्रप्रकारमित्यर्थः।

(ड) मारिष आर्य! आर्यार्थप्रतिपादकनाटकादिप्रयोज्य एष शब्दः। रिष् वधे निषेधार्थकमाशब्देन समासः। मा = न रेषति नाशादिना अनिष्टं जनयतीति मारिषः, मारिषः शोकशोल्यार्य्यो नाट्योक्तौ पुंसि योषितीति मेदिनी।

(५) सर्वथेति। व्यवहर्त्तव्ये व्यवहार्य्ये सर्वेषां समालोचनीये इत्यर्थः वस्तुनि सर्वथा सर्वप्रकारेण अवचनीयता अनिन्द्यता कुतः? न सम्भवतीति भावः। हि निश्चये। स्त्रीणां यथा तथा वाचां, स्त्रीणामिव वाचां, स्त्रीणां वाचाञ्चेत्यर्थः साधुत्वे निर्दोषत्वेऽपि जनो लोकः दुर्जनो दुष्टः दोषशंसीति यावत्

नटः । अतिदुर्जन इति वक्तव्यम् ।

देव्यामपि हि वैदेह्यां सापवादो यतो जनः ।
रक्षोगृहे स्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥ ६ ॥

सूत्र । यदि पुनरियं किंवदन्ती महाराजं प्रति स्यात् ततोऽतिकष्टं स्यात् (ढ) ।

---

भवतीति शेषः । जनाः साध्वीषु अपि योषित्सु सुसाधितास्वपि कवितासु च कथमपि दोषमाशंसन्तीति भावः । सर्वथा व्यवहर्त्तव्यमिति पाठे तु, येन प्रकारेणेष्टं तेनैव व्यवहर्त्तव्यं यतः पद्धतेरतिशुद्धत्वेऽपि निन्दापरिहारसम्भावना नास्तीति भावः ।

(६) अतिदुर्जन इति वक्तव्यतायां हेतुमाह । देव्यामिति । यतो यस्मात् जनो लोकः, जातावेकवचनम् । देव्यां वैदेह्यामपि परमपतिव्रतायां सर्वथा निर्दोषायामपि जानक्यां सापवादः सनिन्दः निन्दाशील इत्यर्थः । ततः कस्मात् न दुर्जन इति वक्तव्यमिति भावः । अथ निन्दामूलं दृढं चेत् तदपायार्थप्रतीकारस्य न सम्यगित्याशङ्क्याह । रक्ष इति । रक्षसो राक्षसस्य रावणस्य गृहे भवने स्थितिर्वास एव अस्य अपवादस्य मूलं कारणम् । इदन्तु न सम्यक्, परगृहे स्थितिमात्रेणैव पतिव्रतायाश्चरित्रदोषो न शङ्कनीय इत्यर्थः । सत्यपि सम्भवे अग्निपरीक्षया सा शङ्का परिहर्त्तव्या, एवंविधपरीक्षायाः सम्यक्त्वात् तु किन्तु अस्या अग्निशुद्धौ अग्निपरीक्षया शुद्धिनिश्चयेऽपि तस्य न निश्चयः न निर्णयः न प्रत्ययः अपि तु सैव दोषाशङ्केत्यर्थः । अपवादकारणस्य सम्यक्त्वे तन्निराकरणकारणस्य चासम्यक्त्वेऽपि न जनस्य निश्चय इत्यहं ब्रवीमि अतिदुर्जन इतीति भावः । इति कथोद्घातः ।

(ढ) यदि पुनः यद्येवमियं किंवदन्ती कुत्सितवादः, किंवदन्ती जनश्रुतिरित्यमरः । किम् ( कुत्सितं )+वद ( वाक्यम् )+( ङीष् ) लोकापवाद इत्यर्थः महाराजं रामं प्रति स्यात् भवेत् । यदि पुनर्निश्चयार्थकं ततस्तदा अतिकष्टमतिशयमनःक्षोभकारणं भवेत् । रामं प्रति इयं किंवदन्ती मां निरतिशयं व्यथयतीति भावः । राजाहः सखिभ्यष्टच् इति टच्प्रत्ययेन महाराज इति पदं सिद्धम् । महाराजं स्पृशेदिति पाठे यदि इयं किंवदन्ती महाराजश्रुतिविषया भवेदित्येवार्थः ।

नटः । सर्वथा ऋषयो देवताश्च श्रेयो विधास्यन्ति (ण) ।
[ परिक्रम्य (त) ।] भो ! भोः ! क्वेदानीं महाराजः ?
[आकर्ण्य ।] एवं जनाः कथयन्ति (थ) ।

स्नेहात् सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान् ।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद् विशति वासगृहं नरेन्द्रः ॥ ७ ॥

इति निष्क्रान्तौ । प्रस्तावना (द) ।

---

(ण) ऋषयो वशिष्ठाद्याः, देवता ब्रह्मादयश्च श्रेयो मङ्गलं विधास्यन्ति करिष्यन्ति, सान्त्वनावाक्यमेतत् । एवंविधपुण्यव्रतस्य महात्मनो रामस्य न कदाचिदपि देवा ऋषयश्चाशुभं सहिष्यन्ते प्रत्युत यतो धर्मस्ततो जय इति न्यायात् शुभमेव विधास्यन्ति अतो नाशुभमाशङ्कनीयमिति भावः ।

(त) राजभवनगमनार्थमिव पदान्तराणि गत्वेत्यर्थः ।

(थ) जनानामुत्तरमाकर्ण्य इव इत्यर्थः ।

(७) किं कथयन्तीत्याह, स्नेहादिति । जनको विदेहः स्नेहात् प्रीत्या सभाजयितुं सम्भाषणादिना जामातॄन् रामभरतादीन् प्रीणयितुम् एत्य अयोध्यायां राजभवनमागत्येत्यर्थः अमूनि एतानि दिनानि दिवसानि उत्सवेन आनन्दव्यापारेण नीत्वा यापयित्वा विदेहान् विदेहस्य जनपदान् स्वराज्यमित्यर्थः गतः प्रस्थितः । ततस्तस्मात् पितृगमनादित्यर्थः विमनसः उत्कण्ठिताया देव्याः सीतायाः परिसान्त्वनाय विनोदनाय नरेन्द्रो रामः धर्मासनाद् विचारासनात् स्वीयसिंहासनादित्यर्थः वासगृहं शयनागारं विशति प्रविशति । राजकार्य्यमपि परित्यज्य देव्याः परिसान्त्वनार्थं स्वयमेव याति इति सीतां प्रति रामस्य स्नेहातिशयो द्योतितः । वसन्ततिलकावृत्तम् ।

(द) इतीति । इति एवं प्रकारेण मिथःसम्भाषणानन्तरं प्रस्तुतविषयमवतार्य इत्यर्थः नटसूत्रधारौ निष्क्रान्तौ रङ्गस्थानान्निर्ययतुः । (निष्क्रान्तः = (Eng. Exit.) प्रस्तावना आमुखमिति वा नाम्ना ख्यातेयं प्रस्तुताक्षेपिणी मिथःसम्भाषणा । तथाहि, नटी विदूषको वापि पारिपार्श्विक एव वा । सूत्र-

ततः प्रविशति (ध) आसनोपविष्टो रामः सीता च।

रामः। देवि! समाश्वसिहि, न ते हि गुरवश्चिरं शक्नुवन्ति अस्मान् वियोक्तुम् (न)। त्यक्तुं

किन्त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति।
सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता॥ ८॥

सीता। जाणामि अज्जउत्त! जाणामि (प) किन्तु सन्दावआरिणो बन्धुजणविप्पओआ होन्ति (१)।

---

(१) जानामि आर्य्यपुत्र! जानामि, किन्तु सन्तापकारिणो बन्धुजनविप्रयोगा भवन्ति।

---

चारेण सहिताः संलापं यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा इति साहित्यदर्पणम्।

(ध) प्रविशति अभिनयस्थले इत्यर्थः = Eng. Enters.

(न) अस्मान् विहाय स्थातुमित्यर्थः।

(८) यदि तथा न शक्नुवन्ति तदा किमिति अस्मान् परित्यज्य तिष्ठन्तीत्याह, किन्त्विति। किन्तु यत् तिष्ठति तत्र हेत्वन्तरं विरोधीति किन्तुशब्दार्थः। किन्तत् हेत्वन्तरमित्याह। अनुष्ठानानां जपहोमादिपारत्रिककर्मणां नित्यत्वं कर्त्तव्यता कर्तृं स्वातन्त्र्यं ऐहिककार्य्येषु स्वच्छन्दचारित्वम् अपकर्षति निवारयति अम्वत्पदकाङ्क्षिणां मुनीनां व्रतादिपारत्रिकपुण्यकर्माणि तान् सांसारिकविषयोपभोगादिकर्मभ्यो निवारयन्तीति भावः। हि तथाहि विशेषेणेत्यर्थः, आहिताः (आ+धा+क्त) यथाविधि स्थापितोऽग्निर्यैस्ते तथोक्तानां साग्निकानामित्यर्थः गृहस्थता गृहधर्मः प्रत्यवायैः विघ्नैः नित्यकर्मबाहुल्यैरित्यर्थः सङ्कटा, सं सङ्कीर्णः कटः स्थानं यत्र तथोक्ता निरवकाशा सङ्कुला इत्यर्थः। हेत्ववधारणप्रश्नविशेषेषु तथाहि हि इति कोषः। विघ्नोऽन्तरायः प्रत्यूह इत्यादि चामरः। कृतदारपरिग्रहाणां द्विजातीनां यथाविधि वैवाहिकाग्नेराधानं तस्मिंश्च यावज्जीवं सायं प्रातर्होमादि कर्म कर्तव्यम् एवं रक्षितेन अग्निना पुनर्मृतानां तेषां दाहः करणीय इति।

(प) जानामि जानामीति शोकावेगात् द्विरुक्तम्।

रामः। एवमेतत् एते हि हृदयमर्मच्छिदः संसारभावाः। येभ्यो बीभत्समानाः सन्त्यज्य सर्वान् कामान् अरण्ये मनीषिणो विश्राम्यन्ति (फ)।

[प्रविश्य कञ्चुकी] (ब)। रामभद्र! [इत्यर्द्धोक्ते साशङ्कम्] (भ)। महाराज!

रामः। [सस्मितम्।] आर्य्य! ननु रामभद्र इत्येव मां प्रति उपचारः शोभते तातपरिजनस्य। तत् यथाभ्यस्तमभिधीयताम् (भ)।

कञ्चु। देव! ऋष्यशृङ्गाश्रमात् अष्टावक्रः सम्प्राप्तः।

सीता। अज्ज! तदो किं विलम्बीअदि? (२)।

---

(२) आर्य्य! ततः किं विलम्ब्यते?।

---

(फ) एवमेतत् एतदेवम्प्रकारमेव, त्वया यदुक्तं तत् सत्यमेव इत्यर्थः। एते अनुभूयमानास्तत्सदृशाश्चान्ये इत्यर्थः हि (निश्चये) हृदयस्य मर्माणि सन्धिस्थानानि छिन्दन्तीति ते तथोक्ताः हृदयग्रन्थिविश्लेषकाः वैराग्यजनका इत्यर्थः संसारभावाः जगद्विषयाः। येभ्यो विषयेभ्य इत्यर्थः बीभत्समानाः (बध् निन्दायां स्वार्थे सन्, यतोऽपायभीजुगुप्सापराजये प्रमादादानभूत्राणविरामान्तर्द्धिवारणं जंपीति जुगुप्सापादानात् पञ्चमी) जुगुप्समानाः विरक्ताः सन्त इत्यर्थः, मनसा ईषन्ति ईक्षन्ते ये ते ईषन्तीति ईषिणः मनस ईषिण इति वा मनीषिणः आत्मदर्शिनः पण्डिता इत्यर्थः सर्वान् सकलान् काम्यन्ते ये ते कामाः विषयास्तान् सन्त्यज्य सम्यग् विहाय विषयवासनां परिहाय इत्यर्थः अरण्ये वने विश्राम्यन्ति सुखीभवन्ति ईश्वरध्यानेन आत्मानं विनोदयन्तीति भावः। संसारक्लेशापनोदनसूचनार्थं विश्राम्यन्तीति श्रमधातोः प्रयोगो युक्त एव।

(ब) अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते। जरावैक्लव्ययुक्तेन विशेद् गात्रेण कञ्चुकी॥ इति भरतः।

(भ) रामभद्रेति नाम्नैव सम्बोधनाभ्यस्तो वृद्धः कञ्चुकी नवाभिषिक्ते रामे महाराज इति पदप्रयोगमकुर्वन् स्खलितवागासीदित्युपचारभङ्गभयम् उपचारो

राम:। त्वरितं प्रविश्य।

[ कञ्चुकी निष्क्रान्त:। ]

[ प्रविश्य अष्टावक्र:। ] स्वस्ति वाम्।

राम:। भगवन्! अभिवादये, इत आस्यताम्।

सीता। भअवं! णमो दे, अवि कुसलं सजामातुअस्स गुरुजणस्स अज्जाए सन्ताए अ? (३)।

राम:। निर्विघ्न: सोमपीथी, (म) आवुत्तो (य) मे भगवान् ऋष्यशृङ्ग: आर्या च शान्ता?

सीता। अह्मेवि सुमरेदि? (४) So they remember us?

[ अष्टा। उपविश्य। ] अथ किं, देवि! कुलगुरुर्भगवान् वशिष्ठस्त्वामिदमाह।

---

(३) भगवन्! नमस्ते अपि कुशलं सजामातृकस्य गुरुजनस्य आर्यायाः शान्तायाश्च।

(४) अस्मानपि स्मरति?

---

विनीतसम्भाषणं शिष्टाचारो वा, Eng Etiquette or forms prescribed by authority to be observed in social or official life. Observance of the proprieties of rank and occasion.

(म) सोम: स्वर्णवर्णपूतिलताकारलताविशेष:। स च हिमवत्सन्निहित-प्रदेशे जायते। पुष्टिहर्षैकाग्रोन्मादादिकरत्वं तस्य रसस्य गुण:। पुरा खलु मुनयो यज्ञादौ विशेषतस्तु सोमयागे शर्करया मिश्रयित्वा आसवीकृतं तद्रसं पीत्वा आत्मानं बहु मन्यन्ते स्म। सोम: सोमरस: पीतोऽनेनेति, इनिप्रत्यय:। पीतमनेनेति वा पीती, सोमस्य पीतीति तथोक्त:। पृषोदरादित्वात् तस्य स्थाने थ:। यथाविध्यनुष्ठितसोमयाग इत्यर्थ:। स च यागो न सर्वसाध्य: अस्य त्रैवार्षिकत्वाद् बह्वन्नत्वात् बहुदक्षिणत्वाच्च।

(य) आवुत्तो भगिनीपति:। नाटकादावेवैष प्रयोगो दृश्यते।

विश्वम्भरा भगवती भवतीमसूत,
राजा प्रजापतिसमो जनकः पिता ते । विधाता Creator
तेषां वधूस्त्वमसि नन्दिनि ! पार्थिवानां,
येषां कुलेषु सविता च गुरुर्वयञ्च ॥ ९ ॥

तत् किमन्यदाशास्महे, केवलं वीरप्रसवा भूयाः (२) ।

रामः । अनुगृहीताः स्मः ।

लौकिकानां हि साधूनामर्थं वागनुवर्त्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ १० ॥

अष्टा । इदञ्च भगवत्या अरुन्धत्या देवीभिः शान्तया च

---

(९) भगवती विश्वं बिभर्त्तीति विश्वम्भरा पृथिवी भवतीमसूत प्रसूतवती, प्रजापतिसमः प्रजानां रक्षणावेक्षणे विधातृसदृशः राजा जनकस्ते पिता, सविता सूर्यः जगतां द्रष्टा दर्शयिता पाता पावनश्च इत्यर्थः जनः येषां पार्थिवानाम् कुलेषु कुलस्य इत्यर्थः गुरुः पिता उद्भवकारणं वंशमूलम् इत्यर्थः । च अपरञ्च वयं, प्रजापतिपुत्रत्वात् पवित्रत्वात् प्रभूततेजस्त्वाच्च त्रिलोकपूज्या इत्यर्थः ( येषां कुलेषु ) गुरवः उपदेष्टारः । गुरुस्तु गीष्पती श्रेष्ठे गुरौ पितरि दुर्भरे इत्युभयत्रापि विश्वः । हे नन्दिनि ! नन्दयतीति पुत्रीसदृशानन्दप्रदत्वात् पुत्रि ! त्वं तेषां पार्थिवानां सूर्य्यवंशीयानाम् इत्यर्थः राज्ञां वधूः स्नुषा । वृत्तं वसन्ततिलकम् ।

(२) तत् किमन्यदाशास्महे आशीःकरणीयमस्ति । अन्यत् पुत्रादन्यदित्यर्थः । लोकेषु यद् यत् प्रार्थनीयमस्ति पुत्रव्यतिरिक्तं तत्तव अस्त्येव । अतस्ते पुत्रादन्यदाशीर्वचनीयं किमपि न पश्यामीति भावः । तदधुना केवलं वीरः प्रसवो यस्याः सा तथोक्ता भूया इत्याशिषि आशीर्लिङ् ।

(१०) लौकिकानामिति । लौकिकानां सामान्यानां साधूनां वाक् हि वाक्यमेव, अर्थं प्रतिपाद्यविषयमनुवर्त्तते अनुसरति, पुनः किन्तु अर्थः प्रतिपाद्यविषयः आद्यानाम् आदिभवानाम् ऋषीणां वाचमनुधावति अनुवर्त्तते । उभयपक्षा एव सत्यवादिनः किन्तु लौकिकाः साधवः सिद्धमर्थं कथयन्ति ऋषयस्तु यत् कथयन्ति तत् पश्चात् सिद्धं भवतीति तेषां विशेष इति भावः ।

भूयोभूयः सन्दिष्टं, यः कश्चिद्गर्भदोहदो (ल) भवति अस्याः सोऽवश्यमचिरात् सम्पादयितव्य इति।

रामः। क्रियते यद्यदेषा कथयति। सीता

अष्टा। ननान्दुः पत्या च देव्याः सन्दिष्टमृष्यशृङ्गेण, वत्से! कठोरगर्भा इति न आनीतासि, (व) वत्सोऽपि रामभद्रस्त्वद्विनोदनार्थमेव स्थापितः। तत् पुत्रपूर्णोत्सङ्गाम् (श) आयुष्मतीं द्रक्ष्यामीति।

रामः। [सहर्षस्मितम्।] तथास्तु। भगवता वशिष्ठेन किमादिष्टोऽस्मि?

अष्टा। श्रूयताम्।

जामातृयज्ञेन वयं निरुद्धा-
स्त्वं बाल एवासि नवञ्च राज्यम्।
युक्तः प्रजानामनुरञ्जने स्या-
स्तस्माद्यशो यत् परमं धनं वः ॥११॥ इति।

रामः। यथाह भगवान् मैत्रावरुणिः (ष)।

---

(ल) दुह्यत इति दोहः। दुहो घञ्। गर्भस्य स्त्रियाः दोहार्थना-कार्यार्थं रसादिकं ददातीति गर्भदोहदः गर्भिण्यभिलषितपुष्टिसाधनयानभोजन-विहारादि पथ्यम् इत्यर्थः। (साध इति भाषायाम्)

(व) यानादिभ्रमणञ्चैव साष्टमात् स्त्री न चार्हतीति शास्त्रादिति भावः।

(श) उत्सङ्गः क्रोड़ः।

(११) जामेति। वयं जामातुः ऋष्यशृङ्गस्य यज्ञेन निरुद्धाः ऋत्विक्त्वेन व्रतिनः सन्तः आबद्धाः आपरिसमाप्तेः प्रतिगन्तुमक्षमा इत्यर्थः। त्वं बाल एव अप्रबुद्ध एव असि नवं नवाधिगतञ्च राज्यम्। प्रजानां लोकानाम् अनुरञ्जने सद्विचारादिना प्रतिपालने युक्तः एकाग्रचित्तः स्याः भवेः तस्मात् प्रजानुरञ्जनात् यत् उत्पन्नं यशः तत् वः युष्माकं परमं सर्वोत्कृष्टं धनम्।

(ष) मित्रश्च वरुणश्च तौ मित्रावरुणौ तयोरपत्यं पुमानिति। कल्पैके मित्रस्य कल्पान्तरे च वरुणस्यापत्यतया तस्येयमाख्येति पौराणिकाः।

स्नेहं दयाञ्च सौख्यञ्च यदिवा जानकीमपि ।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा ॥१२॥

सीता । अदोज्जेव राहवकुलधुरन्धरो अज्जउत्तो (५) * ।

रामः । कः कोऽत्र भोः ! विश्राम्यतां भगवान् अष्टावक्रः ।

अष्टा । [ उत्थाय परिक्रम्य च । ] अये ! कुमारलक्ष्मणः प्राप्तः ।

इति निष्क्रान्तः ।

[ प्रविश्य लक्ष्मणः । ] जयति जयति आर्य्यः । आर्य्य ! तेन चित्रकरेणास्मदुपदिष्टमार्य्यस्य चरितमस्यां वीथिकायाम् (स) अभिलिखितं, तत् पश्यतु आर्य्यः ।

रामः । जानासि वत्स ! दुर्मनायमानां देवीं विनोदयितुम् । तत् कियन्तमवधिं (ह) यावत् ?

---

( ५ ) अतएव राघवकुलधुरन्धर आर्य्यपुत्रः ।

---

( १२ ) स्नेहमिति । लोकानां प्रजानाम् आराधनाय अनुरञ्जनार्थं स्नेहं ममत्वं दयां परदुःखप्रहरणेच्छां सौख्यं सुखसमूहं सौख्यं सुखसाधकविषयसमूहम् इत्यर्थः । यदि वा अथवा किमधिकम् इत्यर्थः जानकीं सीतां प्राणाधिकामपि इत्यर्थः मुञ्चतस्त्यजतो मे मम व्यथा नास्ति, किमधिकं प्रियतमाया अपि प्रियतरा मे प्रजा इति भावः ।

* अतएव भवन्तं राघवकुलधुरन्धरं रघुवंशीयनरपतिगणाग्रगण्यं वदन्तीति भावः ।

( स ) वीथिकायां कुड्योपरिभागे ( देयालेर उपरदिके ) पक्षान्तरे अस्य नाटकस्याभिनयगृहे । चित्रं करोतीति चित्रकरः चित्रशिल्पी, पक्षान्तरे चित्रः विचित्ररचनाशक्तिसम्पन्नः करः हस्तो यस्य सः कविरित्यर्थः । वीथिः पङ्क्तौ गृहाङ्गे चेति मेदिनी ।

( ह ) यावद्योगे द्वितीया ।

लक्ष्म । यावदार्याया हुताशने विशुद्धिः ।

रामः । शान्तम् (च) ।

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः ।
तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ १३ ॥

देवि देवयजनसम्भवे ! (क) प्रसीद, एष ते जीविताविधः (ख) प्रवादः । (evil report)

evil words
कष्टं जनः कुलधनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशिवं न हि तत् क्षमं ते ।

---

(च) अदृष्टमश्राव्यमित्यादिबुद्ध्या असहिष्णुताप्रकाशकवचनमिदं, शान्तं-पदमव्ययम् । शमधातोः णिच् + क्तप्रत्ययप्रयोगनिष्पन्नोऽयं शब्दः ।

(१३) उत्पत्तेः जन्मतोऽपि इत्यर्थः परिपूतायाः शुद्धायाः । यज्ञभूमि-तादियोगरूपबीजाधानकर्मणि जीवस्य जन्म उच्यते तदपवित्रं, पश्चात् क्लेदादि-संवलितं गर्भाशयाद् भूमाववतरणं जन्म, तदप्यपवित्रम् । एतत् सर्वजीवानामेव सम्भवति किन्त्वयोनिसम्भवत्वात् सीतायाः साप्यशुद्धिर्नास्तीति भावः । एवम्भूताया अस्याः शुद्ध्यर्थं पावनान्तरैः अपरैर्गङ्गादिपवित्रतासाधनैः किं, निष्प्रयोजनम् इत्यर्थः । यत्तु सीताया अग्निपरीक्षा सा लोकानां मनःशुद्ध्यर्थं न तु तच्छुद्ध्यर्थमिति भावः । तत्र दृष्टान्तं दर्शयति । तीर्थानां गङ्गादीनामुदकं च वह्निश्च अन्यतः पावनान्तरादित्यर्थः शुद्धिं न अर्हतः । जगत्पावनानां प्रकृति-परिशुद्धानां शुद्ध्यर्थमन्यत् पावनं व्यर्थमिति भावः । दृष्टान्तालङ्कारः । दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति लक्षणात् ।

(क) देवा इज्यन्तेऽस्मिन्निति देवयजनं यज्ञभूमिः, सैव सम्भवत्यस्मादिति व्युत्पत्त्या सम्भव उत्पत्तिस्थानं यस्याः सा तथोक्ता ।

(ख) जीविताविधः जीवितं जीवनकालः अवधिः सीमा यस्य स तथोक्तः यावज्जीवम् इत्यर्थः । सर्वथा दुष्परिहरणीय इति भावः ।

(१४) कथमपवादिनस्त्वया न दण्डिताः प्रत्युत अनुमोदिता एव इत्याशङ्क्य सम्प्रति सनिर्वेदं स्वानुष्ठितायामग्निपरीक्षायां हेतुमुक्त्वा आत्मदोषमपसारयति । कष्टमिति । कुलमेव धनं श्लाघ्यतया रक्षणीयं येषां तैः तथोक्तैः जनैः जनः साधारणः अनुरञ्जनीयः तेषां छन्दानुवर्त्तने आत्मनः अप्रियं कुर्वन्नपीत्यर्थः अनु-

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ १४ ॥ trampling

सीता। भोदु, अज्जउत्त ! भोदु, एहि पेक्खह्म दाव दे चरिदं (६)। [ इति उत्थाय परिक्रामति। ]

लक्ष्म। इदं तावदालेख्यम्।

सीता। [ निर्वर्ण्य। ] के एदे उवरि णिरन्तरट्ठिदा उवत्थुवन्ति विअ अज्जउत्तं (७)।

लक्ष्म। देवि ! एतानि सरहस्यानि जृम्भकास्त्राणि (ग)

(६) भवतु, आर्य्यपुत्र ! भवतु, एहि पश्यामस्तावत्ते चरितम्।
(७) के एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्य्यपुत्रम्।

शोदनीयः, न तु दण्डनीय इति भावः। इत्येव कष्टम्। नः अस्माकं सम्बन्धे यत्तत्, अवाच्यमित्यर्थः, अश्रवणशुभं दुर्वाक्यमिति यावत् कथमग्निपरिशुद्धिं विना सीता ग्राह्या इति यदुक्तमित्यर्थः तत् ते तव तादृशप्रथितयशसः स्वभावपरिपूतायाः इत्यर्थः न क्षमं न योग्यम्। लोकानुरागसङ्कलतत्प्राप्त्यर्थमेव मया वह्निपरीक्षा ते अनुमोदिता न हि मम अप्रत्ययार्थमिति भावः। अत्र निदर्शनामुखेन हेतुं दर्शयति। नैसर्गिकीति। तथाहि सुरभिणः सुगन्धिनः कुसुमस्य मूर्ध्नि जनानां शिरसि स्थितिर्नैसर्गिकी स्वाभाविकी इति सिद्धा चिरप्रसिद्धा, चरणैरवताडनानि अवमर्दनानि न। अत्र वाक्यार्थद्वयस्यान्वयोऽसम्भवन् तादृशदुर्वाक्यप्रयोगेण त्वदवमाननं चरणाघातेन कुसुमावमर्दनञ्च सममिति बिम्बप्रतिबिम्बभावं बोधयन्तीति निदर्शनालङ्कारः। तथाचोक्तं दर्पणकृता, सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना॥ इति। तस्मै यदुक्तमिति पाठे यदुक्तं परीक्षां विना न त्वां ग्रहीष्यामि इत्यादि वचनम्।

(ग) रहसि निर्जने भवानि रहस्यानि गोप्यानि मन्त्रा इत्यर्थः तैः सह वर्त्तमानानि जृम्भकास्त्राणि जृम्भयन्तीति जृम्भकाणि, अस्त्राणां मोहकत्वात् प्रयु-

यानि भगवतः कृशाश्वात् (घ) कौशिकम् (ङ) ऋषिमुपसंक्रान्तानि (च) तेन च ताड़काबधे प्रसादीकृतानि (छ) आर्य्यस्य। *

रामः। वन्दस्व देवि! दिव्यास्त्राणि।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्राः शरदस्तपांसि।
एतान्यपश्यन् गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥१५॥

सीता। णमो णमो एदाणं (८)।

रामः। सर्वथा इदानीं त्वत्प्रसूतिमुपस्थास्यन्ति (ज)।

---

(८) नमो नम एतेषाम्। एतेषामिति सम्बन्धविवक्षया षष्ठी। क्वचित् एदेहिं इत्येव पाठः।

---

तेषु आविर्भावतिरोभावनिद्राजड़तादिहेतुभूतानि जृम्भकास्त्राणि इत्यर्थः अस्त्राणि अस्यन्ते क्षिप्यन्ते इति अस्त्राणि। रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवल्लिङ्गिति मेदिनी।

(घ) विश्वामित्रस्य कश्चित् पूर्वपुरुषः (प्रपितामहः)।

(ङ) कुशिकः विश्वामित्रस्य पितामहः, गाधिर्नाम राजा तस्य पिता।

(च) कौशिकं विश्वामित्रमुपगतानि।

(छ) प्रसादति सन्तुष्यति जनो येषु कार्य्येषु तानि प्रसादानि सानुग्रहदानानि। अप्रसादः प्रसादः कृतानि प्रसादीकृतानि।

(१५) ब्रह्मादयः पुराणाः प्राचीनाः आदिभवा इति यावत् गुरवः शासितारः ब्रह्मणो वेदस्य, वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिरित्युभयत्राप्यमरः। हिताय रक्षणाय, सहस्रात् परा इति परःसहस्राः शरदो वर्षाणि, स्यादृतौ वत्सरे शरदित्यमरः। व्याप्त्यर्थे द्वितीया। तपांसि तप्त्वा, क्रमशो बहुविधानि दुष्कराणि तप्त्वा, तपांसीति बहुवचनम्। एतानि अस्त्ररूपाणि अस्त्ररूपेण परिणतानीत्यर्थः तपोमयानि तपस उद्भूतानीत्यर्थः स्वानि स्वकीयानि तेजांस्येव अपश्यन् दृष्टवन्तः। वृत्तमुपजातिः।

(ज) उपस्थास्यन्ति उपगमिष्यन्ति, त्वत्पुत्राधिकृतानि भविष्यन्तीत्यर्थः।

सीता। अणुग्गहीदह्मि (९)।

लक्ष्म। एष मिथिलावृत्तान्तः।

सीता। अह्महे दलन्तणवणीलुप्पलसामलसिणिद्धमसिणसोहमाणमंसलदेहसोहग्गेण विह्मअत्थिमिदताददीसमाणसुन्दरसिरी अणादरखंडिदसङ्करसरासणो सिहण्डमुद्धमुहमण्डलो अज्जउत्तो आलिहिदो (१०) *।

लक्ष्म। आर्य्ये ! पश्य।

सम्बन्धिनो वशिष्ठादीनेष तातस्तवार्चति।
गौतमश्च शतानन्दो जनकानां पुरोहितः॥ १६ ॥

---

(९) अनुगृहीतास्मि।

(१०) अहो दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलदेहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसुन्दरश्रीः अनादरखण्डितशङ्करशरासनः शिखण्डमुग्धमुखमण्डल आर्य्यपुत्र आलिखितः।

---

* अहो इति। अहो (विस्मयानन्दसंयोगे) दलतीति दलत् प्रफुल्लत् यन्नवनीलोत्पलम् असम्यग्विकसितेन्दीवरमित्यर्थः तदिव श्यामलं मेचकं स्निग्धं लावण्यमयं कोमलञ्च, मसृणं कार्कश्यादिरहितं चिक्कणञ्च, शोभमानम् अङ्गसौष्ठवत्वात् सुन्दरं मांसलं सुघटितदृढमांसवदित्यर्थः यद्देहं तस्य यत् सौभाग्यं सौन्दर्य्यं तेनोपलक्षितः, विस्मयेन स्तिमितं निश्चलं यथा तथा तातेन पित्रा जनकेन दृश्यमाना सुन्दरी श्रीः शोभा यस्य स तथोक्तः। शोभा सम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते। तथा अनादरेण हेलया खण्डितं भग्नं शङ्करशरासनं हरधनुर्येन स तथोक्तः, शिखण्डेन काकपक्षेण मुग्धं सुन्दरं, मुग्धः सुन्दरमूढयोरिति मेदिनी। मुखमण्डलं यस्य स तथोक्तः, आर्य्यपुत्रो राम इत्यर्थः आलिखितश्चित्रितः।

(१६) सम्बन्धीति। एषः तव तातः जनकः जनकानां जनकदेशाधिपतीनां पुरोहितः पुरः अग्रे हितः स्थापितः मङ्गलाय मन्त्राद्युपदेशार्थं सर्वोपरि स्थापितः पुण्यादिकर्मणि उपदेशको गुरुरित्यर्थः। गौतमः शतानन्दः। शतानन्दो

रामः। द्रष्टव्यमेतत्।

जनकानां रघूणाञ्च सम्बन्धः कस्य न प्रियः।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः॥ १७॥

सीता। एदे क्खु तक्कालकिदगोदाणमङ्गला(क) चत्तारो भादरो विवाहदिक्खिदा तुम्हे। अम्महे जाणामि, तस्सिं ज्जेव पदेसे तस्सिं ज्जेव काले वत्तामि (११) *।

रामः। एवम्।

---

(११) एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम्। अहो जानामि, तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्त्ते।

---

हि महल्यागर्भजातो गौतमपुत्रः। सम्बन्धिनः विवाहजन्यसम्बन्धवतः ऋषित्वा-दात्मीयांश्च वशिष्ठादीन् अर्चति प्रत्युद्गच्छति।

(१७) रघूणामपत्यानीति रघवस्तेषाम्। जनकानाम् जनकस्य जनक-वंशीयानाञ्च। उभयोरेव कुलयोः पूज्यत्वात् विश्वामित्रे दानग्रहणकर्त्तृत्वोप-चारेण प्रशंसामात्रम्। जनकरघुकुलयोः सम्बन्धः कस्य जनस्य न प्रियः प्रीति-करः। यत्र सम्बन्धे स्वयं कुशिकनन्दनः विश्वामित्रः स्वय दाता दानकर्त्ता ग्रहीता च।

(क) तमेव कालं विवाहप्राक्कालमित्यर्थः, कालभावाध्ववाढामिति काले द्वितीया। कृतं गवां केशानां दानं छेदनं तदेव मङ्गलं शुभकर्म येषां ते तथोक्ताः, गौर्नाधित्ये वलीवर्दे क्रतुभेदर्षिभेदयोः। स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि। पुंस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्वाणलोमसु इति विश्वः। दो छेदे इति दोधातोरनट् इति गोदानं केशसंस्काररूपं कर्म। गोदानेत्यत्र गोदानं गोपशुवितरणरूपं मङ्गलं कर्म इति केचित्।

* अहो इति। जानामि अनुभवामि मन्ये इत्यर्थः अहं तस्मिन्नेव प्रदेशे जनकालये विवाहाधिष्ठितस्थाने, तस्मिन्नेव काले हरधनुर्भङ्गादिकाले इत्यर्थः वर्त्ते अस्मि।

समयः स वर्त्तत इवैष यत्र मां
समनन्दयत् सुमुखि ! गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः ॥१८॥

लक्ष्म। इयमार्य्या, इयमपि आर्य्या माण्डवी, इयमपि वधूः श्रुतकीर्त्तिः (ञ)।

सीता। वच्छ ! इअं पि अवरा का (१२)।

लक्ष्म। [सलज्जस्मितं स्वगतम्।] अये ! ऊर्मिलां पृच्छति आर्य्या। भवतु अन्यतः सञ्चारयामि (ट)। [प्रकाशम्।] आर्य्ये ! दृश्यतां द्रष्टव्यमेतत्। अयञ्च भगवान् भार्गवः।

सीता। [ससम्भ्रमम्।] कम्पिदह्मि (१३)।

लक्ष्म। आर्य्ये ! पश्य अयमार्य्येण [इत्यर्द्धोक्ते]।

रामः। [साक्षेपम्।] वत्स ! बहुतरं द्रष्टव्यमन्यतो दर्शय।

---

(१२) वत्स ! इयमपि अपरा का।

(१३) कम्पितास्मि।

---

(१८) एवमस्त्येव। यद्वदसि तत्तथैवेत्यर्थः। समय इति। स समयो वर्त्तते इव, यत्र यस्मिन् समये सम्प्रदानसमये इत्यर्थः, हे सुमुखि ! गौतमार्पितः गौतमेन शतानन्देन मम करे स्थापित इत्यर्थः, अयम् आगृहीतम् आमुक्तं परिहितमित्यर्थः कमनीयं सुन्दरं कङ्कणं येन तथोक्तस्तव करः मूर्त्तिमान् महोत्सव इव मां समनन्दयत्।

(ञ) चित्रे इत्थं निर्दिश्य इत्यर्थः।

(ट) अभिनिवेशयामि।

सीता। [सस्नेहबहुमानं निर्वर्ण्य।] सुट्ठु सोहसि अज्जउत्त! एदिणा विणअमाहप्पेण (१४) *।

लक्ष्म। एते वयमयोध्यां प्राप्ताः।

रामः। [सास्रम्।] स्मरामि हन्त स्मरामि।

जीवत्सु तातपादेषु नवे दारपरिग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥१९॥

इयमपि तदा जानकी।

प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलैः
दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम्।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः ॥ २० ॥

---

(१४) सुष्ठु शोभसे आर्य्यपुत्र! एतेन विनयमाहात्म्येन।

---

* महात्मनः शिवगुरोर्जगत्पूज्यस्य भार्गवस्य पराजयलाघवं स्वस्य विजयरूपावदानगौरवञ्चासहमानस्य रामस्य तच्चिह्नपरिवर्जनेच्छारूपौदार्य्येण इत्यर्थः। माहात्म्येन आतिशय्येन।

(१९) तातपादेषु जनके गौरवात् बहुवचनम्। जीवत्सु विद्यमानेषु सत्सु नवे दारपरिग्रहे परिणये सति मातृभिः कौशल्यादिभिः चिन्त्यमानानाम् एवमेवं भविष्यति एवमेवं करिष्याम इति भाविसुखजनकत्वरूपेण अनुभूयमानानामित्यर्थः नः अस्माकं ते हि दिवसाः आनन्ददिनानि गताः अतीताः।

(२०) प्रतन्विति। तथा प्रतनुभिः शैशवकालिकत्वात् क्षुद्रैः विरलैः परस्परासंहतैः तथा प्रान्तेषु उन्मीलन्तः स्फुरन्तः मनोहराः कुन्तलाः केशाः येषां तथोक्तैर्दशनमुकुलैर्बालदन्तैरित्यर्थः उपलक्षिता, तथा मुग्धो मनोहरः आलोकः दर्शनं यस्य तथोक्तं सुदृश्यमित्यर्थः मुखं दधती धारयन्ती शिशुरियमपि जानकी इति पूर्वेणान्वयः। ललितललितैरतिसुन्दरैरित्यर्थः। ललितं त्रिषु सुन्दरम् इत्यमरः। आतिशय्ये द्विरुक्तिः। ज्योत्स्नाप्रायैः कौमुदीसदृशैर्लावण्यमयैरित्यर्थ

लक्ष्म। एषा मन्थरा।

रामः। [ अनुत्तरमन्यतो दर्शयन्। ] देवि वैदेहि !

इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा।
निषादपतिना यत्र स्निग्धेनासीत् समागमः ॥२१॥

लक्ष्म। [ विहस्य स्वगतम्। ] अये मध्यमाम्बावृत्तान्तोऽन्तरित आर्य्येण (ठ)।

सीता। अम्मो एसो जटासञ्जमणवुत्तन्तो (१५) *।

लक्ष्म।

पुत्रसंक्रान्तलक्ष्मीकैर्यद् वृद्धेक्ष्वाकुभिः कृतम्।
धृतं बाल्ये तदार्य्येण पुण्यमारण्यकं व्रतम् ॥ २२ ॥

---

(१५) अहो एष जटासंयमनवृत्तान्तः।

---

नास्ति कृत्रिमो विभ्रमः विलासः भङ्गीविशेषः येषु अज्ञातविभ्रमैरित्यर्थः मधुरैः कोमलैरङ्गकैर्मे मम अम्बानां मातॄणां कुतूहलं वात्सल्याद्दर्शनौत्सुक्यम् अकृत अजनयत्। वृत्तं हरिणी।

(२१) सः अयं पुरोवर्त्ती शृङ्गवेरपुरे इङ्गुदीपादपः इङ्गुदीफलवृक्षः, यत्र वृक्षमूले पुरा स्निग्धेन मित्रेण निषादपतिना गुहेन, वयस्यः स्निग्धः सवया इत्यमरः। स्निह+क्तः। समागमः मीलनम् आसीत्।

(ठ) अन्तरितो व्यवहितः आच्छादित इति यावत्। वृत्तान्तः आचरितम् इत्यर्थः। वृत्तान्तमिति वृत्तमिति वा पाठस्तु समीचीनः। वृत्तान्तमिति पाठे वृत्तान्तम् आचरितं स्वरूपार्थे अन्तशब्दस्य क्लीवलिङ्गत्वात् वृत्तान्तमित्यस्य क्लीवत्वम्।

* जटासंयमनवृत्तान्तः जटाबन्धनव्यापारः।

(२२) पुत्रेति। पुत्रसंक्रान्तलक्ष्मीकैः पुत्रन्यस्तराज्यशासनभारैः वृद्धेक्ष्वाकुभिः प्राचीनैः इक्ष्वाकुवंशीयैः यत् आरण्यकं व्रतं कृतम् अनुष्ठितं तत् पुण्यम् पवित्रम् अरण्यवासादिरूपं व्रतं नियमः आर्य्येण बाल्ये धृतम् अवलम्बितम्।

सीता । एसा पसण्णपुण्णसलिला भअवदी भाईरही (१६)

रामः । देवि रघुकुलदेवते ! (ङ) नमस्ते ।

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसामर्षात् प्लुष्टान् पितुः प्रपितामहान् ।
अगणिततनूपातं तप्त्वा तपांसि भगीरथो
भगवति ! तव स्पृष्टानद्भिश्चिरादुददीधरत् ॥२३॥

सा त्वम् अम्ब ! स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भव (ढ) ।

लक्ष्मणः । एष भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम ।

---

(१६) एषा प्रसन्नपुण्यसलिला भगवती भागीरथी ।

---

(ङ) हे रघुवंशसम्भूतभगीरथप्रतिष्ठिते ! कपिलशापानलदग्धोद्धारकर्त्रि !

(२३) तदेव विवृणोति । तुरगेति । हे भगवति ईश्वरि ! सगराध्वरे सगराख्यस्यास्मत्पूर्वपुरुषस्य कस्यचिद्राज्ञः यज्ञे अश्वमेधे इत्यर्थः तुरगस्य इन्द्रगोपितस्य इत्यर्थः यज्ञीयाश्वस्य विचये अन्वेषणे व्यग्रान् उत्सुकान् उर्वीभिदः स्वर्गे मर्त्ये च अश्वान्वेषणे व्यर्थप्रयत्नत्वात् पातालगमनार्थं भूविदारिण इत्यर्थः, अमर्षात् विरोधात् कपिलस्य महामुनेस्तेजसा प्लुष्टान् दग्धान् भस्मावशेषानित्यर्थः पितुः प्रपितामहान् पूर्वोक्तस्य सगरनृपतेरात्मजस्य असमञ्जस्य षष्टिसहस्रसंख्यकान् वैमात्रेयभ्रातृनित्यर्थः। भगीरथस्तद्वंशीय एव इत्यर्थः। (सगरादसमञ्जस्तु असमञ्जादथांशुमान् । दिलीपोऽंशुमतः पुत्रो दिलीपस्य भगीरथ इत्यादि रामायणम्)। अगणितः अवज्ञातः अविचारितो वा तन्वाः शरीरस्य पातः पतनं यस्मिन् तपःकर्मणि, स्त्रियां मूर्तिस्तनुस्तनूरित्यमरः। तद् यथा तथा तपांसि उत्तरोत्तरं दुष्कराणीत्यर्थः तप्त्वा चिरात् तपसा स्वर्गादवतारितायास्तव अद्भिः सलिलैः स्पृष्टान् तान् उददीधरत् उद्धारयामास । वृत्तं हरिणी ।

(ढ) कल्याणचिन्तातत्परा भव । शुभानुध्यायिनी भवेत्यर्थः । श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् इत्यमरः ।

रामः। [सस्पृहमवलोकयति।]

सीता। सुमरेदि एदं पदेसं अज्जउत्तो (१७)।

रामः। अयि कथं विस्मर्य्यते।

अलसलुलितमुग्धान्यध्वसञ्जातखेदात्
अशिथिलपरिरम्भैर्दत्तसंवाहनानि।
परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥२४॥

लक्ष्म। एष विन्ध्याटवीमुखे विराधसंवादः (ग)।

सीता। अलं दाव एदिणा, पेक्खामि दाव अज्जउत्त-हत्थधरिदतालवेण्टादवत्तं अत्तणो दक्खिणारण्णप्पवेसारम्भं (१८)।

रामः। एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रमतरूणि तपोवनानि।

---

(१७) स्मरति एतं प्रदेशमार्य्यपुत्रः।

(१८) अलं तावदेतेन, पश्यामि तावदार्य्यपुत्रहस्तधृततालवृन्तातपत्रमात्मनो दक्षिणारण्यप्रवेशारम्भम्। अत्र अत्तण इति पाठस्तु न मनोरमः।

---

(२४) अलसेति। यत्र यस्मिन् प्रदेशे त्वमध्वनि पथि सञ्जातो यः खेदः परिश्रमस्तस्माद्धेतोः अलसानि क्रियाजडानि लुलितानि शिथिलानि अतएव मुग्धानि मनोहराणि, तथा अशिथिलैर्गाढैः परिरम्भैरालिङ्गनैर्दत्तं संवाहनं मर्द्दनं येषु तानि तथोक्तानि, तथा परिमृदिताः विदलिताः याः मृणाल्यस्ता इव दुर्ब्बलानि अङ्गान्येव अङ्गकानि, आदरे कः। मम उरसि वक्षसि कृत्वा निधायेत्यर्थः निद्रामवाप्ता गता निद्रिता आसीरिति शेषः। वृत्तं मालिनी।

(ग) विराधो नाम कश्चिद्राक्षसस्तस्य संवादो वृत्तान्तः। सम्बाधः संरोध इति वा पाठे विराधकर्त्तृकास्मद्गमनबाधा इत्येवार्थः।

येष्वातिथेयपरमाः शमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥२५॥

लक्ष्म। अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः सन्ततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगो गिरिः प्रस्रवणो नाम (त)।

---

(२५) एतानीति। गिरिनिर्झरिणीनां गिरिनदीनां तटेषु प्रान्तेषु एतानि तानि पूर्वदृष्टानि इत्यर्थः वैखानसानां यतिविशेषाणाम् आश्रमतरवो येषु तानि तथोक्तानि तपोवनानि सन्तीति शेषः। येषु तपोवनेषु अतिथये हितम् आतिथेयम् अतिथिसेवा एव परमं प्रधानं कर्म येषां ते तथोक्ताः, यद्वा आतिथेयेषु परमाः प्रधानाः श्रेष्ठा इत्यर्थः अतएव नीवारमुष्टिं पचन्ति ये ते तथोक्ताः अतिथिसेवार्थं नीवारपाकशीला न तु स्वार्थमिति भावः। शमिनः शमदमाद्युपेता गृहिणः तपस्विरूपगृहस्था इत्यर्थः गृहाणि भजन्ते। वसन्ततिलकं वृत्तम्।

(त) अयं पुरतो दृश्यमान इत्यर्थः, अविरलैर्निविडैः, न ओकः स्थानं जहतीत्यनोकहाः वृक्षाः। वृक्षो महीरुहः शाखी विटपी पादपस्तरुः। अनोकहः कुटः सालः पलाशी द्रुद्रुमागमा इत्यमरः। तेषां निवहाः निचयास्तैर्निरन्तरं निरवकाशम्, 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च इत्यमरः। निबिड इत्यर्थः तथा स्निग्धः मसृणः, स्निग्धस्तु मसृणे सान्द्रे इत्यमरः। नीलः श्यामलश्च परिसरः परिसृतपर्यन्तभागः ( Surface. ) पर्यन्तभूः परिसरः इत्यमरः। यस्य तत्तथोक्तेन अरण्येन परिणद्धा परिवेष्टिता, अरण्यं परितो नद्धा विस्तृता वा या गोदावरी तया मुखरः गोदावरीकल्लोलकोलाहलेन शब्दायमान इत्यर्थः कन्दरो गुहा यस्य स तथोक्तः, सन्ततमविरतं, सततेऽनारताश्रान्तसन्तताऽविरतानिशम्। नित्यानवरताजस्रमित्यमरः। अभिष्यन्दमानैः स्रवद्भिः वर्षद्भिरित्यर्थः मेघैर्मेदुरितः मेदुरः कृतः स्निग्धीकृत इत्यर्थः नीलिमा श्यामलत्वं यस्य स तथोक्तः, जनस्थानमध्यगः गिरिः प्रस्रवणो नाम। दाक्षिणात्यप्रदेशे दण्डकारण्यान्तर्वर्त्ति तदुत्तरसीमास्वरूपं वानप्रस्थादीनां जनानामाश्रमस्थानं किञ्चिदल्पारण्यं जनस्थानमिति नाम्ना प्रसिद्धमासीदिति पौराणिकाः। उक्तञ्च अनेनैव दण्डकानुद्दिश्य महाकविना जनस्थानपर्य्यन्तानि दीर्घारण्यानि दक्षिणां दिशमभिवर्त्तते इति। न केवलं दण्डकैव जनस्थानमपीत्यादिकम्। अत्युच्चतया नियतप्रतिबद्धमेघत्वात् मेघानां च नियतस्रवणादस्य गिरेः प्रस्रवणेत्याख्या इत्याशयः।

स्मरसि सुतनु! तस्मिन् पर्वते लक्ष्मणेन
प्रतिविहितसपर्य्यासुस्थयोस्तान्यहानि?।
स्मरसि सुरसनीरां तत्र गोदावरीं वा?
स्मरसि च तदुपान्तेष्वावयोर्वर्त्तनानि?॥ २६ ॥

अपिच।

किमपि किमपि मन्दं मन्दमासत्तियोगात्
अविरलितकपोलं जल्पतोरक्रमेण।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णोः
अविदितगतयामा रात्रिरेव व्यरंसीत् ॥२७॥

---

(२६) शोभना तनुर्यस्याः सा, हे सुतनु! तस्मिन् पर्वते प्रस्रवणे इत्यर्थः लक्ष्मणेन प्रतिविहितया कृतया सपर्य्यया सेवया सुस्थयोरज्ञातभ्रमणादिदुःखयोः आवयोस्तानि अहानि दिवसानि स्मरसि किम्? तत्र सुरसं नीरं यस्याः तां तथोक्तां स्वादुसलिलां, रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे॥ इति मेदिनी। गोदावरीं स्मरसि वा? गाम् अम्बु ददातीति गोदाः नद्यस्तासु वरा श्रेष्ठेत्यर्थः, ङीष्। तदुपान्तेषु तत्-सीमासमीपवर्त्तिप्रदेशेषु तत्तटेष्वित्यर्थः आवयोः वर्त्तनानि वासक्रीडाभ्रमणादि-स्थानानि स्मरसि च? मालिनीवृत्तम्।

(२७) किमपीति। आसत्तियोगात् परस्परगात्रसंसर्गात् आसत्तिर्मिलनम् अविच्छिन्नता तस्याः योगः घटना इति षष्ठीतत्पुरुषः। अविरलितौ परस्परमिलितौ कपोलौ गण्डौ (गालटुँटि इति भाषा) यस्मिन् जल्पनकर्मणीत्यर्थः तद् यथा तथा अक्रमेण परस्परपर्य्यायव्यतिरेकेण औत्सुक्यातिशयात् यथागतभावक्रमेणेत्यर्थः मन्दं मन्दं मृदु मृदु किमपि किमपि संलापसुखार्थमेव क्वचिदिदं क्वचिदन्यदित्यर्थः जल्पतोः कथयतोः तथा अशिथिलो गाढो यः परिरम्भः आलिङ्गनं तस्मिन् व्यापृतौ निरतौ एकैकमन्योऽन्यं परस्परमित्यर्थः, एकैकमिति षष्ठी अव्ययत्वान्न विभक्तिनिर्देशः। दोष्णौ बाहू ययोस्तयोः तथोक्तयोः पुनः पुनर्गाढालिङ्गनव्यग्रहस्तयोरित्यर्थः आवयोः सम्बन्धे रात्रिः अविदितम् अज्ञातं यथा तथा गताः यामाः प्रहराः, द्वौ यामप्रहरौ समावित्यमरः। यस्याः सा तथोक्तैव व्यरंसीत्

लक्ष्म। एषा पञ्चवट्यां शूर्पणखा।

सीता। हा अज्जउत्त! एत्तिअं ज्जेव दंसणं (१९) *।

रामः। अयि विप्रयोगत्रस्ते! चित्रमेतत् (थ)।

सीता। जहा तहा होदु, दुज्जणो असुहं उप्पादेइ (२०)।

रामः। हन्त! वर्त्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति।

लक्ष्म।

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणैरार्य्यचरितैः
अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥२८॥

---

(१९) हा आर्य्यपुत्र! एतावदेव दर्शनम्।
(२०) यथा तथा भवतु, दुर्जनोऽसुखमुत्पादयति।

---

विरता प्रभाता आसीदित्यर्थः। ऐकान्तिकभोगनिरतानामल्पानां प्राणिनां सुखकालो हि अज्ञात एव गच्छतीति भावः। मालिनीवृत्तम्।

* एतावत्कालपर्य्यन्तमित्यर्थः। नूनमेव इयं राक्षसी मां भक्षिष्यति तत्र पुनरावयोरन्योन्यदर्शनमिति भावः। एषा तु आसन्नवनगमनरूपा भविष्यद्वाणीव ध्वन्यते।

(थ) विप्रयोगो विच्छेदः तस्मात् त्रस्ता भीता तत्सम्बोधने। हे वियोगभीरु! न पुनरियं तत्त्वतो राक्षसी, अपितु चित्रं चित्रार्पिता मूर्त्तिः। एतद्भवत्याः न त्रासकारणम्।

(२८) अथात्र वाक्यालङ्कारे। इदं पुरोवर्त्ति यद् दृश्यत इत्यर्थः, पापैः पापात्मभिः रक्षोभिः राक्षसैः कनकमयो यो हरिणस्तस्य यत् छद्म कपटः तस्य विधिना अनुष्ठानेन कनकमृगरूपधारिमारीचमाययेत्यर्थः तथा तत्प्रकारं तदित्यर्थः आवृत्तम् आचरितं कृतमित्यर्थः। एष पापात्मभिः कृतः सीताहरणरूपः वृत्तान्तः इत्यर्थः। यथा यत् क्षालितम् अपसारितं प्रतिकृतमपि अद्य

सीता । [ सास्रम् । ] अइ देव रहुउलाणन्द ! एव्वं वि मम कारणादो किलिन्तो आसी (२१) ।

लक्ष्म । [ रामं निर्वर्ण्य साकूतम् ] (द) । आर्य्य ! किमि-तत् ।

अयन्ते वाष्पौघस्त्रुटित इव मुक्तामणिसरो
विसर्पन् धाराभिर्लुठति धरणीं जर्जरकणः ।

---

( २१ ) अयि देव रघुकुलानन्द ! एवमपि मम कारणात् क्लान्त आसीः ।

---

रावणनिधनसीतानयनकार्य्यादिना निर्विषयीकृतमपीत्यर्थः व्यथयति पीड़यति मामिति शेषः । शून्ये सीतारहिते इत्यर्थः जनस्थाने विगता कला सामर्थ्यं येषां तानि तथोक्तानि, कला तु भागभेदे स्यात् कुसीदेऽवयवे गुणे । विद्या सामर्थ्यसंख्यासु नौकायां कपटे तथेति कोषात् । करणानि इन्द्रियाणि येषु, करणं साधकतमं चेत्रगात्रेन्द्रियेष्वपीति विश्वः । तैः तथोक्तैः आर्य्यस्य रामस्य चरितैः रोदनादिचेष्टितैर्ग्रावा पर्वतः, महीध्रे शिखरिक्ष्माभृदहार्य्यधरपर्वताः । अद्रि-गोत्रगिरिग्रावाचलशैलशिलोच्चया इत्यमरः । रोदिति क्रन्दति वज्रस्य अतिकठिन-स्यापि हृदयमपि दलति विदीर्य्यतीति मन्ये । अपि शङ्कायाम् । गर्हासमु-च्चयप्रश्नशङ्कासम्भावनास्वपीत्यमरः । वर्त्तमानवदनुभूयमानत्वाद्वर्त्तमानप्रयोगः । विकलकरणैरिति पाठे विकलानि अतएव करुणानि शोकोद्दीपनानि । शिख-रिणी वृत्तम् ।

( द ) निर्वर्ण्य निरूप्य, रामस्य भावादीन् दृष्ट्वेत्यर्थः । साकूतं साभि-प्रायम् ( आ+कू+क्त भावे ) कथं भवतोऽधुनाप्येष भाव इत्यादि लक्ष्मणस्याभि-प्रायः आकूतं, कवेस्तु भाविसीतावनगमनदुःखव्यापारात् रामसीतयोरज्ञातकार-णयोरपि स्वाभाविकी उत्कण्ठा इति आशयः ।

( २९ ) अयमिति । अयं ते तव जर्जराः पतन्तः कणाः विन्दवो यस्य तथोक्तः वाष्पौघः अश्रुप्रवाहः त्रुटितश्छिन्नो मुक्तामणिमयः सरतीति सरो माल्य-मिव, सरो द्व्यक्षगत्योर्भावमालासमीरणे इति मेदिनी । धाराभिर्विसर्पन्

निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति चिरमाध्मातहृदयः ॥ २९ ॥

रामः। वत्स !

तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां करोति ॥ ३० ॥

सीता। हद्धी हद्धी अज्ज अहं वि अदिभूमिं गदेण रणरणएण (घ) अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि (२२)।

लक्ष्म। [स्वगतम्।] भवतु अन्यतः क्षिपामि (न)। [चित्रम्

(२२) हा धिक् हा धिक् अद्य अहमपि अतिभूमिं गतेन रणरणकेन आर्यपुत्रशून्यमिव आत्मानं पश्यामि।

धरण्यां लुठति भूमौ पततीत्यर्थः। निरुद्धोऽपि अन्तःसंयमितोऽप्यावेगः शोकावेगः चिरं निर्दयं यथा तथा आध्मातं ताडितं हृदयं येन स तथोक्तः अतएव शोकाघातात् स्फुरत् कम्पमानम् अधरयोः नासायाश्च पुटं यस्य तथोक्तस्य तव भावेन स आवेग इत्यर्थः परेषामन्येषामुन्नेयो अनुमेयो भवति। वृत्तं शिखरिणी।

(३०) तदिति। प्रियजनस्य सीतायाः विप्रयोगात् विरहात् जन्म यस्य स तथोक्तः तीव्रोऽपि दुर्विषहोऽपि दुःखाग्निः प्रतिकृतिवाञ्छया प्रतिविधानेच्छया विसोढः कथमपि सोढ इत्यर्थः पुनर्विपच्यमानः चित्रदर्शनेन अधुना पुनरुद्दीप्तः स दुःखाग्निरित्यर्थः आघातादिना पुनर्विपच्यमानः पुनः पाकं प्राप्यमानः हृन्मर्मव्रण इव हृदयसन्धिस्थानगतस्फोटक इव मनसि वेदनां करोति व्यथां जनयति। वृत्तं प्रहर्षिणी।

(घ) अतिशयिता या भूमिस्तामतिभूमिं चरमसीमामित्यर्थः गतेन रणरणकेन उद्वेगेन, रणति शब्दायते यत्र रणो घञ्, इत्यादनन्तरं संज्ञायां कन्।

(न) क्षिपामि सञ्चारयामि, अन्यविषये अस्य मानसम् अभिनिवेशयामि इत्यर्थः।

अवलोक्य प्रकाशम्। ] अथैतन्मन्वन्तरपुराणस्य (प) गृध्रराजस्य तत्रभवतः तातजटायुषः चरित्रविक्रमोदाहरणम्।

सीता। हा ताद! णिव्वुढ़ो (फ) दे अपच्चसणेहो (२३)।

रामः। हा तात काश्यप शकुन्तराज! क्व पुनस्त्वादृशस्य महतस्तीर्थस्य (ब) साधोः सम्भवः।

लक्ष्म। अयमसौ जनस्थानपश्चिमतः चित्रकुञ्जवान् नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभूभागः, तदिदमृष्यमूकपर्वते मतङ्गस्य आश्रमपदम्, इयञ्च श्रमणा नाम सिद्धशवरी, तदेतत् पम्पाभिधानं सरः।

सीता। जत्थ किल अज्जउत्तेण विच्छड्डिदामरिसाधीणं (भ) पमुत्तकण्ठं रुदिअं आसी (२४)।

---

(२३) हा तात! निर्व्यूढ़स्ते अपत्यस्नेहः।

(२४) यत्र किल आर्य्यपुत्रेण विच्छर्दितामर्षाधीनं प्रमुक्तकण्ठं रुदितम् आसीत्।

---

(प) महाप्रलये मनूनां परिवर्त्तनं भवतीति प्रसिद्धिः। सम्प्रति हि स्वायम्भुवमनोर्भ्रंगीरधिकारः। अस्य मनोः पूर्वतरस्य कस्यचिदपरमनोः कालावर्त्तमानस्य इत्यर्थः। अथवा महाप्रलये सर्वजीवप्रलयात् स्वायम्भुवमनोर्यदन्तरमवकाशस्तत्कालप्राचीनस्य। यद्वा एकसप्ततिचतुर्युगमितपरिमाणकालस्य प्राचीनस्य। मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिरित्यमरः। [ ३११४४८००० ] एतन्मितवर्षवयस्कस्य वा।

(फ) निर्व्यूढ़ः निष्पादितः प्रतिपादितो वा। अपत्यस्नेहात् यत् कर्त्तव्यं तत्त्वया कृतमिति भावः।

(ब) विद्यादिविविधगुणयुक्तपात्रस्य। तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिष्विति मेदिनी।

(भ) विच्छर्दितः उद्गीर्णो योऽमर्षः अक्षान्तिः असहिष्णुतेति यावत् तदधीनं सीतावियोगवैक्लव्यवशमित्यर्थः।

राम:। देवि! रमणीयमेतत् पम्पासर:।

एतस्मिन् मदकलमल्लिकाख्यपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीका:।
वाष्पाम्भ: परिपतनोद्गमान्तराले
संदृष्टा: कुवलयिनो भुवो विभागा:॥ ३१॥

लक्ष्म। अयमार्य्यो हनूमान्।

सीता। एसो सो चिरणिव्विसजीअलोअपच्चुद्धरणगुरुओवआरी महाणुभाओ मारुदी (२५) *।

---

(२५) एष स चिरनिर्विसजीवलोकप्रत्युद्धरणगुरूकोपकारी महानुभावो मारुति:।

---

(३१) एतस्मिन्निति। हे देवि! एतस्मिन् पम्पासरसि, वाष्पाम्भसां वाष्पवारीणाम् अश्रूणामित्यर्थ: परिपतनमुद्गमश्च तयोरन्तराले अवकाशे (Interval), मदेन हर्षेण कलन्तीति कलास्तेषां कलानां मधुरास्फुटध्वनिकारिणां यद्वा मदेन कलो मधुरास्फुटध्वनिर्येषां ते तथोक्तानां मल्लिकाख्यानां मल्लिकानामकानां हंसविशेषाणां पक्षैर्व्याधूता: विकम्पिता: अतएव स्फुरन्तश्चञ्चला: उरवो दीर्घा: दण्डा: मृणाला: येषां तानि तथोक्तानि पुण्डरीकाणि श्वेतोत्पलानि येषु ते तथोक्ता: कुवलयिन: उत्पलवन्त:। पुण्डरीकं सिताम्भोजमिति, स्यादुत्पलं कुवलयमिति चामर:। भुवो विभागा: भूखण्डा इत्यर्थ: संदृष्टा:। वृत्तं प्रहर्षिणी।

* चिरनिर्विसस्य परकौर्य्यादिहेतुकचिरदु:खितस्य, परकौर्य्यापमानादेर्निर्वेद: स्वावमाननेति साहित्यदर्पणात्। जीवलोकस्य प्रत्युद्धरणात् दु:खमोचनात् गुरूकोपकारी महोपकारी महानुभावो महातेजा:, मारुतस्यापत्यं पुमानिति मारुति: पवनपुत्रो हनुमान्। त्रैलोक्यपीड़करावणवधान्न केवलं ममैवोपकारी अपितु निखिलभुवनानामपि उपकारी ह्येष मारुतिरिति भाव:।

रामः । दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्द्धनः ।
यस्य वीर्य्येण कृतिनो वयञ्च भुवनानि च ॥३२॥

सीता । वच्छ ! एसो कुसुमिदकअम्बतरुतण्डविदवरहिणो किंणामधेओ गिरी । जत्थ अणुभावसोहग्गमेत्तपरिसेसधूसरसिरी मुहुत्तं मुच्छन्तो तुए परुदिएण अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो (२६) † ।

लक्ष्म ।

सोऽयं शैलः ककुभसुरभिर्माल्यवान् नाम यस्मिन्
नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः । (३३) ॥

---

(२६) वत्स ! एष कुसुमितकदम्बतरुताण्डवितबर्हिणः किंनामधेयो गिरिः । यत्र अनुभावसौभाग्यमात्रपरिशेषधूसरश्रीः मुहूर्त्तं मूर्च्छन् त्वया प्ररुदितेनावलम्बितस्तरुतले आर्य्यपुत्र आलिखितः ।

---

(३२) दिष्ट्येति । दिष्ट्येति हर्षसूचकमव्ययम् अहो इत्यर्थः सः प्रसिद्धः अयं महाबाहुः भुजबलसम्पन्नः अञ्जनानन्दवर्द्धनः अञ्जनानन्दनः हनुमान्, यस्य वीर्य्येण पराक्रमेण वयं भुवनानि त्रिजगन्ति च कृतिनः कृतार्थाः ।

† वत्स ! एष कुसुमान्येषां जातानीति कुसुमिताः पुष्पिताः ये कदम्बतरवस्तेषु ताण्डविताः नृत्यन्तः, पुं नृत्यं ताण्डवं प्रोक्तं स्त्रीनृत्यं लास्यमुच्यते । बर्हिणो मयूरा यत्र स तथोक्तः, मयूरो बर्हिणो बर्हीत्यमरः । किंनामधेयः किमाख्यो गिरिः, नामैवेति नामधेयः स्वार्थे धेयः । यत्र गिरौ पर्वते तरुतले वृक्षस्य अधोभागे अनुभावः प्रभावस्तेज इति यावत् तस्य सौभाग्यं समृद्धिस्तन्मात्रस्य परिशेषादवशिष्टत्वात् धूसरा पाण्डुवर्णा श्रीः कान्तिर्यस्य स तथोक्तः आर्य्यपुत्रः मुहूर्त्तं मूर्च्छन् प्ररुदितेन अत्यन्तं रोरुद्यमानेन त्वया आलम्बितः धृतः इत्येवंप्रकारेण आलिखितश्चित्रितः ।

(३३) ककुभैरर्जुनपुष्पैः, नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुन इत्यमरः । सुरभिः सुगन्धिः । सुरभिर्घ्राणतर्पणः । इष्टगन्धः सुगन्धिः स्यादित्यमरः । सः

रामः।

वत्सैतस्माद् विरम विरमातःपरं न क्षमोऽस्मि
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः ॥३४॥

लक्ष्म। अतः परमार्य्यस्य तत्रभवतां कपिराक्षसानाञ्च असंख्यातानि उत्तरोत्तराणि कर्म्माश्चर्य्याणि, परिश्रान्ता चेयमार्य्या, तद् विज्ञापयामि विश्राम्यतामिति (म)।

सीता। अज्जउत्त! एदेण चित्तदंसणेण पच्चुप्पसदोहदाए अत्थि मे विसप्पं (२७)।

रामः। ननु आज्ञापय।

सीता। जाणे * पुणो वि पसस्सगम्भीरासु वणराइसु

---

(२७) आर्य्यपुत्र! एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया अस्ति मे विज्ञाप्यम्।

---

अयं माल्यवान् शैलः। यस्मिन् शैले नीलः नीलवर्णः स्निग्धः शीतलः नूतनः नवाविर्भूतः तोयवाहः मेघः श्रयति अवलम्बते। मन्दाक्रान्तावृत्तनिबद्धस्य अस्य अर्द्धश्लोकस्य अपरार्द्धं रामोक्त्या पूरितम्।

(३४) वत्स! लक्ष्मण! एतस्मात् माल्यवत्पर्वतवृत्तान्तादित्यर्थः विरम विरम निवर्त्तस्व, आग्रहातिशये वीप्सायां द्विरुक्तिः। अतः परं द्रष्टुमिति शेषः न क्षमोऽस्मि न शक्नोमि, स पूर्वमनुभूतः मे मम जानकीविप्रयोगः पुनः प्रत्यावृत्त इव पुनर्लब्धप्रसर इव नवीभूत एवेत्यर्थः। मन्दाक्रान्तावृत्तम्।

(म) अत इति। अतः परम् अस्मात् परम् आर्य्यस्य रामस्य तत्रभवतां महात्मनां कपिराक्षसानञ्च असंख्यातानि अगणितानि उत्तरोत्तराणि परेभ्यः पराणि उत्कृष्टेभ्यः उत्कृष्टानीत्यर्थः कर्म्माश्चर्य्याणि कर्म्माण्येव आश्चर्य्याणि अद्भुतकर्म्माणीत्यर्थः, इयमार्य्या सीता च परिश्रान्ता, तद् विज्ञापयामि निवेदयामि विश्राम्यतां विश्रामो लभ्यतामिति।

* जाने इच्छामीत्यर्थः।

विहरिस्सं पवित्तणिम्मलसिसिरावगाहाञ्च भअवदीं भाईरहीं अवगाहिस्सं (२८)।

रामः। वत्स लक्ष्मण!

लक्ष्म। एषोऽस्मि।

रामः। अचिरं सम्पादनीयोऽस्या दोहद इति, सम्प्रत्येव गुरुभिः सन्दिष्टम्। तत् अस्खलितसुखसम्पातं रथमुपस्थापय (य)।

सीता। अज्जउत्त! तुम्हेहिं वि तहिं गन्तव्वं (२९)।

रामः। अयि कठिनहृदये! एतदपि वक्तव्यमेव (र)।

सीता। तेण हि पिअं मे (३०)।

लक्ष्म। यथाज्ञापयति आर्य्यः। [ इति निष्क्रान्तः। ]

रामः। प्रिये! इतो वातायनोपकण्ठे मुहूर्त्तं संविष्टौ भवावः (ल)।

---

(२८) जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि, पवित्रनिर्मलशिशिरावगाहाञ्च भगवतीं भागीरथीमवगाहिष्ये।

(२९) आर्य्यपुत्र! युष्माभिरपि तत्र गन्तव्यम्।

(३०) तेन हि प्रियं मे।

---

(य) अस्खलितः अनुद्धातः अतएव सुखयतीति सुखः सुखजनकः सम्पातो गमनं यस्मिन् स तथोक्तः। रथशकटादिगमनकाले यद्रथादीनां चाञ्चल्यं तेन च आसनस्थानस्य यदुत्कम्पः ऊर्द्ध्वं घातो वा य आसीनमुत्थाप्य पश्चात् सहसैव पातयति स एवोद्धातः तद्दोषरहित इत्यर्थः।

(र) त्वमहञ्च पृथगिति चिन्तयितुमपि शक्नोषीत्येतत् सम्बोधनम्।

(ल) उपकण्ठे सन्निधौ संविष्टौ शयानौ। समीपे निकटासन्नसन्निकृष्टसनीड़वत्। सदेशोऽभ्याससविधसमर्य्यादसवेशवत्। उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययमिति। तथा स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपीति चामरः।

सीता। एव्वं भोदु, ओहीरिज्जामि * क्खु परिस्सम-जणिदाए णिद्दाए (३१)।

राम:। तेन हि निरन्तरमवलम्बस्व (व) मामत्र शयनाय।

जीवयन्निव ससाध्वसश्रमस्वेदबिन्दुरधिकण्ठमर्प्यताम्।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रम:॥ २५॥

[तथा कारयन् सानन्दम्।] प्रिये! किमेतत्।

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्प: किमु मद:।

---

(३१) एवं भवतु, अपक्रिये खलु परिश्रमजनितया निद्रया।

---

* अपक्रिये अपहृतास्मि अभिभूतास्मीत्यर्थ:।

(व) निरन्तरं निर्नास्ति अन्तरमवकाशो यस्मिन् तत्। कालव्ययमन्तरेणैव इत्यर्थ:, अथवा गाढमित्यर्थ:। अवलम्बस्व क्रियाविशेषणमेतत्।

(२५) जीवयन्निति। साध्व अत्यन्तम् अस्यति विक्षिपति मन: इति साध्वसं भयम्। दरत्रासौ भीतिर्भी: साध्वसं भयमित्यमर:। तेन सह वर्त्तमानो य: श्रम: खेद:, आलेख्यगतराक्षसादिदर्शनोद्भूत इत्यर्थ: तस्मात् स्वेदबिन्दवो घर्म-बिन्दवो यस्मिन् बाहौ स तथोक्त: अतइव ऐन्दवैरिन्दुसम्बन्धीयैर्मयूखैश्चन्द्रकिरणै: चुम्बित: स्पृष्ट: अतएव स्यन्दति स्रवतीति स्यन्दी तुषारशीकरवानित्यर्थ: यश्चन्द्रमणि-हार: चन्द्रकान्तमणिस्रक् तस्य विभ्रम: विलास इव विभ्रमो यस्मिन् स तथोक्त:, अथवा तस्य विभ्रमो भ्रान्ति: यस्मिन्, यो बाहु: खेदार्द्रत्वात्तुषारस्राविचन्द्रकान्त-मणिहारसदृशो जात:, यद्वा स्वेदबिन्दुसिक्ते यस्मिन् बाहौ तुषारनिस्यन्दिचन्द्र-मणिहारभ्रान्तिर्भवतीति भाव: स तथोक्तो बाहु: जीवयतीति जीवयन्निव मामिति शेष: अधिकण्ठं कण्ठे अर्प्यतां स्थाप्यतामित्यर्थ:। तत् कृत्वा सन्तप्तहृदयं मां शीतलं कुरु इति भाव:। रथोद्धतावृत्तम्।

(२६) प्रिये! किमेतत्, एतद एषा वर्त्तमाना मदीयावस्था का, नाहं तां निर्णेतुं शक्नोमीति भाव:। तदेव विवृणोति, विनिश्चेतुमिति। एतदित्यनेन सर्वेषामन्वय: तच्च पूर्वोल्लिखितैतत्शब्ददर्शनादूह्यम्। एतन्मदुपभुज्यमानं सुख-मिति वा, अन्यथा कथमेष सेवार्थमाग्रह:। दुःखमिति वा, अन्यथा कथमिदं

तव स्पर्शे स्पर्शे मम हि परिमूढ़ेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च ॥ ३६ ॥

सीता । [ विहस्य । ] थिरप्पसादा तुम्हे, इदो दाणिं किमवरं (३२) * ।

रामः । म्लानस्य जीवकुसुमस्य विकाशनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।
एतानि ते सुवचनानि सरोरुहाक्षि !
कर्णामृतानि मनसश्च रसायनानि ॥ ३७ ॥

(३२) स्थिरप्रसादा यूयम्, इत इदानीं किमपरम् ।

हृतप्रभावमपि उत्कण्ठा, प्रमोहश्चैतन्याभावो वा, अन्यथा कथमात्मनोऽस्तित्वमपि नानुभवामि, निद्रा स्वापो वा, अन्यथा स्वप्नसदृशं किमेतदलौकिकमनुभवामि, विषविसर्पः विषप्रवेशजन्यः क्रमेण मोहचैतन्यकरो रोगविशेषः वा, अन्यथा कथं क्षणे ज्ञानशून्यता क्षणे च ज्ञानं, किम्‌ मदः मद्यपानान्मोहमिश्रित आनन्दविशेषो वा, अन्यथा कुत एतन्मनश्चाञ्चल्यं, सम्मोहानन्दसम्भेदो मदो मद्योपयोगज इति साहित्यदर्पणे मदलक्षणदर्शनात् । इत्येष मदीयो भाव इत्यर्थः विनिश्चेतुं निर्णेतुं न शक्यः । अशक्तौ हेतुमाह, तवेति । तव स्पर्शे स्पर्शे प्रतिस्पर्शे इत्यर्थः परिमूढ़ः इन्द्रियगणो यस्मिन् स तथोक्तो विकारः मम चैतन्यं भ्रमयति च सम्मीलयति आच्छादयति च सम्मोहयति च इत्यर्थः । एकस्पर्शे मम चैतन्यं घूर्णमानम् अपरस्पर्शे च सुखमाहात्म्यादाच्छादितं भवति तत् कथमहं विनिश्चिनोमि किमवस्थोऽहमितीति भावः । शिखरिणीवृत्तम् ।

* यूयं स्थिरः निश्चलः प्रसादः अस्मान् प्रति प्रसन्नता प्रीतिरिति यावत् येषां ते तथोक्ताः । अस्मान् प्रति चिरमेवैतादृशी ते प्रीतिः यन्मामेवं सुखप्रदतया बहु मन्यसे अतस्ते प्रीतिरेव ते सुखकारणम् इतः अस्मात् परं किम् अपरं कारणम् इदानीमस्ति न किमपीत्यर्थः, आत्मनः प्रसादगुणेनैव त्वं प्रसन्नोऽसि नात्र अस्मद्गुणोऽनुसन्धेय इति भावः ।

( ३७ ) हे सरोरुहाक्षि ! इन्दीवरनयने ! एतानि ते तव सुवचनानि म्लानस्य सांसारिकश्रमसन्तापादिना शुष्कप्रायस्य जीवकुसुमस्य हृत्पुष्पस्य विकाशनानि प्रफुल्लीकरणानि, सन्तर्पणानि आत्मनस्तृप्तिसाधनानि, सकलानामिन्द्रियाणां मोहनानि मोहकराणि, तथा कर्णयोः अमृतानि अमृतवत् सुखप्रदानि,

सीता। पिअंवद! एहि संविसह्म (३३)।

इति शयनाय समन्ततो निरूपयति।

रामः। किमन्वेष्टव्यम्।

आविवाहसमयाद् गृहे वने शैशवे तदनु यौवने पुनः।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते॥ ३८॥

सीता। [निद्रां नाटयन्ती।] अत्थि एदं अज्जउत्त! अत्थि एदं (३४) *। [इति स्वपिति।]

रामः। कथं प्रियवचना वक्षसि प्रसुप्तैव। [निर्वर्ण्य सस्नेहम्।]

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।

---

(३३) प्रियंवद! एहि संविशामः।

(३४) अस्तीदमार्य्यपुत्र! अस्तीदम्।

---

मनसश्च रसायनानि रसस्य वीर्य्यस्य अयनानि आधानानि आधिव्यधादिनाशकानि औषधानि उत्साहशक्तिप्रदानीत्यर्थः, रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे॥ इति विश्वकोषात्। यज्जराव्याधिविध्वंसि भेषजं तद्रसायनमिति भैषज्यरत्नावलीधृततन्त्रवचनाच्च रसायनस्यायमेवार्थः प्रशस्यते। वसन्ततिलकं वृत्तम्।

(३८) आविवाहेति। विवाहसमयात् आ आरभ्येत्यर्थः, आशब्देन सुप्सुपेति समासः। स्थानावच्छेदे गृहे तदनु वने च, पुनः कालावच्छेदेऽपि शैशवे, तदनु तत्पश्चात् यौवने च स्वापहेतुर्निद्रालम्बनम् अन्यया लङ्गिनया स्त्रिया अनुपाश्रितः अनालम्बितः अनुपभुक्त इत्यर्थः, एष रामबाहुस्ते तव उपधानं शिरोधानमासीदिति शेषः, अधुनाऽपि तदस्तु, किं तदर्थमन्वेषणेति भावः। रथोद्धतावृत्तम्।

* अस्तीदं तदेव भवति इत्युक्त्वा उपाधानीकृत्य स्वपिति इत्यर्थः।

(३९) इयमिति। इयं गेहे गृहे लक्ष्मीः श्रीः, नयनयोः नेत्र... या

अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥३९॥

[ प्रविश्य प्रतीहारी । ] देव ! उवत्थिदो (३५) ।

रामः । अये कः ।

प्रती । आसण्णपरिचारओ देवस्स दुम्मुहो (३६) * ।

रामः । [ स्वगतम् । ] शुद्धान्तचारी † दुर्मुखः, स मया पौरजानपदान् अपसर्पितुं ‡ प्रयुक्तः । [प्रकाशम् ।] आगच्छतु ।

प्रतीहारी निष्क्रान्ता ।

[ प्रविश्य दुर्मुखः । स्वगतम् । ] हा कधं सीदादेवीए ईदिसं अचिन्तणिज्जं जणाववादं देवस्स कधइस्सं, अहवा णिओओ क्खु ईदिसो मन्दभाअस्स (३७) ।

---

( ३५ ) देव ! उपस्थितः ।

( ३६ ) आसन्नपरिचारको देवस्य दुर्मुखः ।

( ३७ ) हा कथं सीतादेव्या ईदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्यामि, अथवा नियोगः खलु ईदृशो मन्दभागस्य ।

---

वर्तिः अमृतमयी वर्तिः अञ्जनशलाका चक्षुषि कज्जललेपनार्थं तूलिकाविशेषः, अमृतवत् नयनानन्ददायिनीत्यर्थः, असौ अस्याः प्रियायाः स्पर्शः वपुषि गात्रे बहुलः प्रचुरः चन्दनरसः, अयं कण्ठे अर्पित इति शेषः बाहुः शिशिरः शीतलः मसृणः उज्ज्वलश्च मौक्तिकसरः मुक्तामाला । इत्थम् अस्याः किं न प्रेयः प्रीतिकरं यदि परं केवलं विरहस्तु असह्यः सोढुमशक्यः । शिखरिणीवृत्तम् ।

* आसन्नो निकटस्थः सन् परिचरति सेवते इति आसन्नपरिचारकः ।

† शुद्धान्ते अन्तःपुरे चरति परिचरतीति । स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्चेत्यमरः ।

‡ चररूपेण परीक्षितुम् । अप=पृष्ठतः+सृप—गमने ।

[ सीता उत्स्वप्नायते । ] हा अज्जउत्त ! कहिं सि (३८) ।

रामः । अये ! सैवेयं रणरणकदायिनी चित्रदर्शनाद् विरहभावना देव्याः स्वप्नोद्वेगं करोति ।

[ सस्नेहमङ्गमस्याः परामृशन् । ]

अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत् प्राप्यते ॥४०॥

---

(३८) हा आर्य्यपुत्र ! कुत्र असि ।

---

(४०) अथ चिरविरहनिपीड़िताया अभ्यस्तपरिदेवनायास्तदेकजीवितायाः प्रियाया वनवासे एवमेव विलपितानि आसन्नित्यनुध्यायन् सर्वं दुःखामर्षसहकारित्वं स्वीयसौभाग्यम् एतादृश्याश्च स्त्रिया गुणवर्णनं कथयित्वा तस्या दुःखसन्तापादीन् अनुशोचति । अद्वैतमिति । द्विधा इतं भेदं गतं द्वीतं भिन्नं तस्य भावः द्वैतं भिन्नभावः तन्नास्ति यस्य तत् यत् भार्य्यारूपमनिर्वचनीयं वस्तु सुखदुःखयोः पत्युः अद्वैतम् अभिन्नं समानं पत्या समसुखदुःखमित्यर्थः, यत् सर्वासु अवस्थासु सुखेषु दुःखेषु चेत्यर्थः अनुगुणम् अनुकूलं, न च सुखेषु अनुकूलं दुःखेषु च प्रतिकूलमिति भावः, यत्र यस्मिन् हृदयस्य विषयार्जनपरिरक्षणविनशनादिदुःखसन्तप्तस्येत्यर्थः विश्रामः, यद्धि जीवितालम्बनमिति भावः यस्मिन् रसः अनुरागः, रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः । इति विश्वः । जरसा वार्द्धक्येन न हार्य्यः न हरणीयः अकृत्रिमत्वादस्वार्थकत्वाच्च वृद्धेऽपि वयसि यत्र न प्रेमहानिरित्यर्थः । तथा कालेन समयेन जनसमीपे परिचयविस्तारेणेत्यर्थः आवरणस्य हृदावरणस्य लज्जादेः अत्ययादपगमात् परिणते परिपक्वे स्नेह एव सारः स्थिरांशः, सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु इत्यमरः । तस्मिन्, यत् स्थितं, यथाकालेन दुग्धादेर्जलांशापगमात् परिणते स्नेहसारे नवनीतमात्राद्यवशिष्टं स्यात् तद्वल्लज्जासङ्कोचादेरपगमानन्तरं परिणतस्नेहसारे रूपान्तरितं प्रियारूपं यद् वस्तु स्थितमित्यर्थः, तस्य तादृशस्य शोभनस्य मानुषस्य प्रियारूपस्य एकमविच्छिन्नं तत् मनःकल्पितं निष्प्रत्यूहमित्यर्थः भद्रं मङ्गलं, श्वःश्रेयसं शिवं भद्रं कल्याणं

दुर्मु। [ उपसृत्य। ] जअदि जअदि देओ (३९)।

रामः। ब्रूहि यदुपलब्धम् (अ)।

दुर्मु। उवत्थुअन्ति देअं पोरजाणवदा, विसुमरिदा अह्मे महाराअदसरहस्स (ष) रामदेएण त्ति (४०)।

रामः। अर्थवाद (स) एषः, दोषन्तु मे कच्चित् कथय, येन स प्रतिविधीयते।

दुर्मु। [ साखम्। ] सुणादु देओ (४१)। [कर्णे] एवमेवम्।

रामः। अहह! तीव्रसंवेगो वाग्वज्रः। [इति मूर्च्छति।]

दुर्मु। आस्ससदु देओ (४२)।

रामः। [ आश्वस्य। ]

हा हा धिक् परगृहवासदूषणं यद्
वैदेह्याः प्रशमितमद्भुतैरुपायैः।

---

( ३९ ) जयति जयति देवः।

( ४० ) उपस्तुवन्ति देवं पौरजानपदाः, विस्मारिता वयं महाराजदशरथस्य रामदेवेनेति।

( ४१ ) शृणोतु देवः।

( ४२ ) आश्वसितु देवः।

---

शुभमित्यमरः। कथमपि कथञ्चिदपि प्राप्यते। अपि अशक्यसम्भावनायां हि हि निश्चितम्। निर्दोषस्य परमपरिपूतस्यापि सुमानुषस्य निष्प्रत्यूहशुभसङ्घटनमतीव दुर्घटमिति भावः। शार्दूलविक्रीडितम् वृत्तम्।

( अ ) उपलब्धं ज्ञातं, बुद्धिर्मनीषा धीः प्रज्ञा शेमुषी मतिः। प्रेक्षोपलब्धिश्चित् संवित् प्रतिपज्ज्ञप्तिचेतनाः॥ इत्यमरकोषात्।

( ष ) स्मृत्यर्थदयेशामिति कर्मणि षष्ठी।

( स ) किञ्चिदनुसुचितमिति बुद्धा यत् कस्यचिदर्थस्य निन्दायाः स्तुतेर्वा वादः सोऽर्थवादः। अत्र तु स्तुत्यर्थवादः गुणकथनमित्यर्थः।

एतत् तत् पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसृतम् ॥ ४१ ॥

तत् किमत्र मन्दभाग्यः करोमि। [ विमृश्य सकरुणम्। ] अथवा किमन्यत्।

सतां केनापि कार्य्येण लोकस्याराधनं व्रतम्।
यत् पूरितं हि तातेन माञ्च प्राणांश्च मुञ्चता ॥ ४२ ॥

सम्प्रत्येव भगवता वशिष्ठेन सन्दिष्टम्।

अपिच।

यत् सावित्रैर्दीपितं भूमिपालै-
र्लोकश्रेष्ठैः साधु शुद्धं चरित्रम्।
मत्सम्बन्धात् कश्मला किंवदन्ती
स्याच्चेदस्मिन् हन्त! धिङ्मामधन्यम् ॥ ४३ ॥

हा देवि! देवयजनसम्भवे! हा स्वजन्मानुग्रहपवित्रीकृत-वसुन्धरे! हा जनकवंशनन्दिनि! हा पावकवशिष्ठा-रुन्धतीप्रशस्तशीलशालिनि! हा रामैकजीविते! हा महा-

---

( ४१ ) अद्भुतैराश्चर्य्यैरग्निपरीचारूपैः। अलर्कः मत्तकुक्कुरः। शुनको भषकः श्वा स्यादलर्कस्तु स रोगितः इत्यमरः। तस्येदमालर्कं मत्तकुक्कुरदंशजात-मित्यर्थः। प्रसृतं व्याप्तम्। प्र+सृप (गतौ)+क्त। कदाचिच्छरीरप्रविष्टं कुक्कुरविषं यथा मन्त्रादिना प्रतिकृतमपि पुनरलक्षितरूपेण सर्वावयवेषु व्याप्तं सत् बहुकालानन्तरं दारुणविकाररूपेण आविर्भवति तद्वदिदं वैदेहीगतं परगृह-वासदूषणं अग्निपरीक्षादिना प्रतिकृतमपि पुनः सर्वराज्याङ्गेषु विसृतं तदधुना सर्वथैवेदमप्रतिविधेयं जातमिति भावः। प्रहर्षिणीवृत्तम्।

( ४३ ) सविता सूर्य्यः। सूर इत्यारभ्य भानुर्हंसः सहस्रांशुस्तपनः सविता रविरित्यमरः। तदीयैः सूर्य्यवंशीयैरित्यर्थः। साध्विति क्रियाविशेषणम्। साधु अतिशयेन दीपितम्। कश्मला कलुषिता मलिना निन्दामयीत्यर्थः। अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषमित्याद्यमरकोषदर्शनात्। शालिनी-वृत्तम्।

रण्यवासप्रियसखि! हा तातप्रिये! हा स्तोकप्रियवादिनि! कथमेवंविधायाः तव अयमीदृशः परिणामः।

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥ ४४ ॥

[दुर्मुखं प्रति।] दुर्मुख! ब्रूहि लक्ष्मणम्, एष ते नूतनो (ह) राजा रामः समाज्ञापयति। [कर्णे] एवमेवम्।

दुर्मु। कधं दाणीं अग्गिपरिसुद्धाए गब्भपरिस्फुडिदपवित्तरहुउलसन्ताणाए देईए दुज्जणवअणादो एव्वं अणज्जं अज्झवसिदं देवेण (४२)।

रामः। शान्तम्। कथं दुर्जनाः पौरजानपदाः।

इक्ष्वाकुवंशोऽभिमतः प्रजानां जातञ्च दैवाद्वचनीयवीजम्।
यच्चाद्भुतं कर्म विशुद्धिकाले प्रत्येतु कस्तद्भुवि दूरवृत्तम् ॥४५॥

---

(४२) कथमिदानीमग्निपरिशुद्धाया गर्भपरिस्फुटितपवित्ररघुकुलसन्तानाया देव्या दुर्जनवचनादेवमनार्य्यमध्यवसितं देवेन।

---

(४४) त्वयेति। त्वत्पुण्यैः जगन्ति पवित्राणीत्यर्थः त्वयि जनानाम् एतानि निन्दावचनानि त्वया जनाः, नाथ्यन्ते प्रार्थ्यन्ते इति नाथाः अभीष्टपदार्थाः मङ्गलानीत्यर्थः तद्वन्तः सम्पन्ना भवन्तीति शेषः त्वं स्वयं मयि नाथे स्थिते सतीत्यर्थः अनाथा अशरणा सती विपत्स्यते विपन्ना भविष्यसि? सर्वथा विगर्ह्योऽयं संसारः निर्विवेकश्च विधिरिति भावः। अनुष्टुप्वृत्तम्।

(ह) नूतनः अदृष्टाश्रुतपूर्वचरित इत्यर्थः यतोऽस्यैतादृशी विसंवादिनी वृत्तिर्यद्विदितसर्ववृत्तान्तोऽपि निरतिशयस्नेहवानपि सर्वथा निर्दोषां तद्गतजीवितां प्रियतमां जानकीं प्रति एवं नृशंसमाज्ञापयतीति भावः।

(४५) वचनीयस्य निन्दाया वीजं कारणम्। दूरवृत्तं दूरे लङ्कायां वृत्तं सम्पन्नम्। उपजातिवृत्तम्।

तद्‌ गच्छ।

दुर्मु। हा देइ! (४४)। [इति निष्क्रान्तः।]

रामः। हा कष्टमतिबीभत्सकर्मा नृशंसोऽस्मि (च) संवृत्तः।

शैशवात् प्रभृति पोषितां प्रियां
सौहृदादपृथगाश्रयामिमाम्।
छद्मना परिददामि मृत्यवे,
सौनिको गृहशकुन्तिकामिव॥ ४६॥

तत् किमिति अस्पर्शनीयः पातकी देवीं दूषयामि। [सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन्।]

अपूर्वकर्मचाण्डालमयि मुग्धे! विमुञ्च माम्।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम्॥ ४७॥

---

(४४) हा देवि!

---

(च) अतिबीभत्स्यते अतिशयेन निन्द्यते इदमिति बीभत्सं, कर्मणि घञ्। जघन्यं तादृशं कर्म यस्य स तथोक्तः। नॄन् मानवान् शंसति हिनस्तीति नृशंसः। नृ+शन्स्+अण्।

(४६) सू प्रेरणे तुदादिग+क्त=सून+आप् स्त्री सूना प्राणिवधस्थानं प्राणिवधश्च। सूनं सूना वा जीविका यस्य स सौनिकः मांसविक्रयी (कसाइ इति भाषा)। गृहस्य शकुन्तिकां क्षुद्रपक्षिणीं गृहपालितपक्षिणीमित्यर्थः। खगे विहङ्गेत्यारभ्य शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजा इत्याद्यमरः। रथोद्धता-वृत्तम्।

(४७) अपूर्वेति। चण्डाल एव चाण्डालः, कर्मणा चाण्डालः कर्म-चाण्डालः, अपूर्वः पूर्वमीदृशाचरणस्याभावादिति भावः, यः कर्मचाण्डालस्तं तथोक्तं मां विमुञ्च परित्यज अतिनिष्करुणं मामाश्रित्यैव तवैतादृशं दुःखमिति त्वं चन्दनभ्रान्त्या चन्दनभ्रमेण दुःखजनको विपाकः परिणामो यस्य तं तथोक्तं प्राणसंहारकमित्यर्थः विषद्रुमं विषवृक्षं श्रितासि। त्वं शीतलवीर्येन मां हृदि

[ उत्थाय । ] हन्त विपर्य्यस्तः सम्प्रति जीवलोकः, अद्य पर्य्यवसितं जीवितप्रयोजनं ( क ) रामस्य, शून्यमधुना जीर्णारण्यं जगत्, असारः संसारः, कष्टप्रायं शरीरम् । अशरणोऽस्मि, ( ख ) किं करोमि, का गतिः, क्व गच्छामि । अथवा,

दुःखसंवेदनायैव रामे चैतन्यमर्पितम् ।
मर्म्मोपघातिभिः प्राणैर्वज्रकीलायितं स्थिरैः ॥४८॥

हा अम्ब अरुन्धति ! हा भगवन्तौ वशिष्ठविश्वामित्रौ ! हा भगवन् पावक ! हा देवि भूतधात्रि ! हा तात जनक ! हा तात ! हा मातरः ! हा प्रियसख महाराज सुग्रीव ! हा सौम्य हनूमन् ! हा परमोपकारिन् लङ्काधिपते विभीषण ! हा सखि त्रिजटे ! दूषिताः स्थ परिभूताः स्थ रामहतकेन । अथवा को नामाहमेतेषामाह्वाने (ग) ।

---

परिपालयसि मां पुनः प्राणघ्नं विषमिति न जानासीति महती ते भ्रान्तिरित्यर्थः ।

( क ) विपर्य्यस्तः विरुद्धं परि सर्वतः अस्तः विक्षिप्तः । विरुद्धं परिणत इत्यर्थः अधुना सर्वमेव मे विषतुल्यं प्रतिभाति प्रियतमान्यपि वस्तूनि मे अप्रियाणि जातानि किमधिकं जीवितमपि कष्टजनकमिति भावः । अस्य प्रयोजनस्य पर्य्यवसितं, सुखमेव जीवितप्रयोजनं मम तु सम्प्रति सर्वथैव तस्यासम्भवत्वादतः परं जीवनधारणं निष्प्रयोजनमित्यर्थः ।

( ख ) अशरणोऽस्मि अनवलम्बोऽस्मीत्यर्थः । गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधावित्यर्थः या मे आसीत् तया विना अहं सर्वैरेव जनैर्विरहितोऽस्मीति भावः । शरणं गृहरक्षित्रोरिति यादवः ।

( ४८ ) म्रियते यस्मादाहतादिति मर्म, मृधातोर्मनिन्प्रत्ययः । जीवनस्थानम् । मर्माणि आघातो विद्यते येषां तैस्तथोक्तैस्तथापि स्थिरैः निश्चलैः प्राणैः वज्रकीलम् अतिकठिन इत्यर्थः यो वज्रदण्डस्तेनेवाचरितं न भग्नमित्यर्थः । अहो कठिनता प्राणानां यन्मर्माहता अपि न देहान्निर्गता इति भावः ।

( ग ) रामहतकेन अतिपापकारित्वात् हतात्मना रामेणेत्यर्थः, अनादरे

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना॥ ४९॥

योऽहम्

विस्रम्भादुरसि निपत्य लब्धनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम्।
आतङ्कस्फुरितकठोरगर्भगुर्वीं
क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि॥ ५०॥

[ सीतायाः पादौ शिरसि कृत्वा। ] देवि! देवि! अयं पश्चिमस्ते रामस्य शिरसि पादपङ्कजस्पर्शः (घ)। [ इति रोदिति। ]

[ नेपथ्ये। ] अब्रह्मण्यम् अब्रह्मण्यम् (ङ)।

---

क:। दूषिताः संसर्गादिना अपवित्रीकृताः परिभूतास्तिरस्कृता अवमानिताः स्थ। अथवा पक्षान्तरे, कोऽहं किमधिकारी अहमित्यर्थः। अहमेतादृशः पापात्मा यत् तादृशानां पुण्यचरितानां महात्मनां नामापि मुखे कर्तुं न योग्यो-ऽस्मीति भावः।

(५०) विस्रम्भात् प्रियतम इति विश्वासात्। समौ विश्वासविस्रम्भावित्य-मरः। आतङ्केन व्याघ्रादिभयेन स्फुरितः दीर्घोच्छ्वासितहृदयेन समं कम्पितश्चा-ञ्चल्यं गत इत्यर्थः कठोरः पूर्णः यो गर्भस्तेन गुर्वीं मन्थरां गर्भवेदनोपगतत्वात् आत्मपरित्राणार्थं पलायितुमप्यक्षमामित्यर्थः। क्रव्यं मांसमदन्तीति क्रव्यादः श्वापदा व्याघ्रादयः तेभ्यः बलिमिव ग्रासार्थोपहारमिव क्षिपामि ददामि। नास्ति घृणा करुणा यस्य स तथोक्तः। कृपा दयानुकम्पा स्यात् कारुण्यं करुणा घृणेत्य-मरः। प्रहर्षिणीवृत्तम्।

(घ) पश्चिमः शेषः। एतादृशः पवित्रात्मा त्वं यत्तव पादपङ्कजं मम शिरसि स्पर्शनयोग्यम् अतः शिरसा स्पृशामि, एष च स्पर्शः शेषः नाहमेतादृशस्य पादपङ्कजस्य चिरोपभोगे समर्थोऽस्मीति भावः।

(ङ) अब्रह्मण्यं विप्राणां वेदानाञ्चाविनाश्यानां नाशो जात इत्यर्थः।

रामः । ज्ञायतां भोः ! किमेतत् ।

[ पुनर्नेपथ्ये । ]

ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ।
लवणत्रासितः स्तोमस्त्रातारं त्वामुपस्थितः ॥ ५१ ॥

रामः । आः ! कथमद्यापि राक्षसत्रासः ? तद् यावदस्य दुरात्मनः कुम्भीनसीपुत्रस्य समुन्मूलनाय शत्रुघ्नं प्रेषयामि। [ कतिचित्पदानि गत्वा, पुनः प्रतिनिवृत्य । ] हा देवि ! कथमेवंविधा गमिष्यसि । भगवति वसुन्धरे ! श्लाघ्यां दुहितरमवेक्षस्व जानकीम् (च) ।

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम् ।
यां देवयजने पुण्ये पुण्यशीलामजीजनः ॥ ५२ ॥

इति निष्क्रान्तः ।

सीता । हा सोम्म अज्जउत्त ! कहिं सि । [सहसोत्थाय । ] हद्धी हद्धी दुस्सिविणरणरणअविप्पलद्धाहं अज्जउत्तं आक्कन्दामि । हद्धी ! हद्धी ! (छ) कधं एआइणीं मं परिसुत्तं

---

अब्रह्मण्यमवध्योक्ताविव्यमरः । ब्रह्मणे विप्राय वेदाय वा साधु यत् तद्ब्रह्मण्यम् नास्ति ब्रह्मण्यं वेदविप्रहितं यत्र तदब्रह्मण्यम् । सर्वनाशप्राय उत्पातो जात इति भावः । तच्च प्रतिकर्त्तव्यमिति फलितार्थः ।

( ५१ ) स्तोमः समूहः ।

( च ) कथमेवंविधा गमिष्यसि । एवमज्ञातकारणा विश्रब्धनिद्राऽपि, अचिरेण तु वनगमनायाहूतास्मान् परित्यज्यापुनर्दर्शनाय असहायैव गमिष्यसीति भावः । मन्दभाग्या पुनस्तु मत्परित्यागात् अस्मात् क्षणादेव निःसहाया त्वमिति तत् किमत्र विधेयमित्याह भगवतीति । पृथिवीसहाया तिष्ठेत्यर्थः ।

( छ ) चक्षुषी निमील्यैवेदमाह पश्चात्तु उन्मील्य दृष्ट्वा च हा धिक् हा धिक् कथमेकाकिनीमित्यादि ।

उज्झिअ अज्जउत्तो गदो, ता किं दाणीं एदं, भोदु तस्स कुविस्सं जइ तं पेक्खन्ती अत्तणो पहविस्सं। को एत्थ परिजणो ? (४५)।

[ प्रविश्य दुर्मुखः। ] देइ! कुमारलक्खणो विस्सवेदि, सज्जो रहो, आरुहदु देईत्ति (४६)।

सीता। इअमहं आरुहह्मि। [ उत्थाय परिक्रम्य। ] परिस्फुरदि विअ मे गब्भभारो, ता सणिअं गच्छह्म (४७)।

दुर्मु। इदो इदो देई (४८)।

सीता। णमो णमो तवोधणाणं, णमो णमो रहुउलदेवदाणं, णमो णमो अज्जउत्तचरणकमलाणं, णमो णमो सअलगुरुअणाणं (४९)।

इति निष्क्रान्ताः सर्वे।

इति चित्रकदर्शनो नाम प्रथमोऽङ्कः।

---

(४५) हा सौम्य आर्य्यपुत्र! कुत्रासि। हा धिक् हा धिक् दुःखप्रबोधरणकविप्रलब्धाहमार्य्यपुत्रमाक्रन्दामि। हा धिक् हा धिक् कथम् एकाकिनीं मां प्रसुप्तामुज्झित्वा आर्य्यपुत्रो गतस्तत् किमिदानीमेतत्, भवतु तस्य कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि, कोऽत्र परिजनः ?।

(४६) देवि! कुमारलक्ष्मणो विज्ञापयति, सज्जो रथः, आरोहतु देवीति।

(४७) इयमहमारोहामि। परिस्फुरतीव मे गर्भभारः, तत् शनैर्गच्छामः।

(४८) इत इतो देवी।

(४९) नमो नमस्तपोधनेभ्यः, नमो नमो रघुकुलदेवताभ्यः, नमो नमः आर्य्यपुत्रचरणकमलेभ्यः, नमो नमः सकलगुरुजनेभ्यः।

# द्वितीयोऽङ्कः।

[ नेपथ्ये । ] स्वागतं तपोधनायाः (क)।

[प्रविश्य । अध्वगवेशा (ख) तापसी । ] अये वनदेवता इयं फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते (ग)।

प्रविश्य । वनदेवता । अर्घ्यं विकीर्य ।

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ १ ॥

---

(क) सु सुखेन आगतमागमनं, सुखस्य आगतं प्राप्तिर्वा ।

(ख) अध्वनि पथि गच्छतीति अध्वगा पथिका तदुपयुक्तः वेशो यस्याः सा । अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।

(ग) अर्घ्यः अर्हं पूजायां घञ् न्यङ्कादित्वात् कुत्वम् । पूजार्थोपचारः दूर्वाक्षतादिः । मूल्ये पूजाविधावर्घ्य इत्यमरः । आपः क्षीरं कुशाग्राणि दधि सर्पिश्च तण्डुलाः । यवाः सिद्धार्थकश्चैवमष्टाङ्गार्घ्यं प्रकीर्त्तितम् । सिद्धार्थकं श्वेतसर्षपः । रक्तबिल्वाक्षतैः पुष्पैः दधिदूर्वाकुशैस्तिलैः । सामान्यः सर्वदेवानामर्घ्योऽयं परिकीर्त्तित इति देवीपुराणम् । रक्तबिल्वं कुङ्कुमं जाफ्राण इत्यपभाषा । अभावे दधिदुग्धादेर्मानसं वा प्रकल्पयेदित्याचारादर्शः । चन्दनोदकसंमिश्रं दत्त्वार्घ्यं कुसुमं रवेः । मधुपर्क इत्यादि स्मृतिः । दधि सर्पिर्जलं क्षौद्रं सिता चैतैश्च पञ्चभिः । प्रोच्यते मधुपर्कस्त्वित्यादि च शास्त्रदर्शनात् प्राक्काल-प्रथितपूजार्थद्रव्याण्येतान्यवगम्यन्ते ।

(१) यथेच्छमिति । इदं वनं वो युष्माकं यथेच्छं यथारुचि भोग्यं मम परस्येति नाभिलाषसङ्कोचः करणीय इत्यर्थः । कुत इत्यत आह अयमिति, अयम् उपस्थित इत्यर्थः मे सुदिवसः भवत् समागमात् शुभदिनमित्यर्थः कथमस्मत्समागमात् सुदिवस इत्याह सतामिति, सन्तीति सन्तस्तेषां सतां प्राणिनां पुण्येन सुकृतेन कथमपि दैवात् [illegible] कारणादित्यर्थः सद्भिः साधुभिः सङ्गः समा-

ताप । किमत्रोच्यते ।

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्य्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥

उभुपविशतः ।

वन । कां पुनरत्रभवतीमवगच्छामि ।

ताप । आत्रेयी अस्मि ।

वन । आत्रेयि ! कुतः पुनरिहागम्यते, किं प्रयोजनं वा दण्डकारण्यप्रवेशे ?

---

जन्मो भवति । अतः साध्वीभवतः समागमरूपेण पुण्यपरिपाकफलेन अनुमीयते ज्ञायतेऽयं मे सुदिवस इति फलितार्थः । मदीयपुण्योपचयसम्पाकात् भवदागमनात् मयाद्य दुर्लभः साधुसेवावसरः प्राप्त इति भावः । सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सदित्युभयवाप्यमरः । तरूणां छाया तोयं जलं यदपि तपसो योग्यं फलं वा मूलं वा अशनं यत्किञ्चित् फलमूलादि भोज्यमस्तीति भावः तदपि तपस्वियोग्यं तपःसाधनाय सुदुर्लभं फलमूलाद्यपीत्यर्थः इह वने वो युष्माकं न पराधीनं युष्माकमधीनमेवेत्यर्थः । आत्मद्रव्यवत् यथासुखमुपभुङ्क्ष्वेति भावः । शिखरिणीवृत्तम् ।

(२) समभ्यर्थनपरितुष्टा तापसी वनदेवतायाः साधुत्वं प्रशंसति । प्रियेति । साधूनां सतां वृत्तिर्वर्त्तनं स्वभाव इत्यर्थः प्रायेण बाहुल्येन प्रिया निरतिशयप्रीतिजनिका, वाचि वाक्ये नियमो व्यवस्था विनयेन शिष्टाचारविधिना मधुरः सुखदः, मतिर्बुद्धिः प्रकृत्या स्वभावेन कल्याणी जीवानां शुभकरी, परिचयः प्रणयः अनवगीतः कपटादिदोषरहितत्वादनिन्दितः समधिकहितसाधक इत्यर्थः । तत्तस्मात् पूर्वोक्तबहुलगुणवत्त्वादित्यर्थः पुरोऽग्रे पश्चात् परे वा अविपर्य्यासितः अविपर्य्ययित रसः अनुरागो यस्मिन् तत् तथोक्तं नित्यप्रीतिकरमित्यर्थः अनुपधि अकपटं विशुद्धं सर्वथा निर्दोषं साधूनामिदं रहस्यं साधारणैरज्ञेयमनिर्वचनीयं चरितमित्यर्थः विजयते सर्वोत्कर्षेण वर्त्तते । कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमरः । शिखरिणीवृत्तम् ।

आत्रेयी । अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्य्यटामि ॥ ३ ॥

वन । यदि तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणाय उपासते, तत् कोऽयमत्र आर्य्याया दीर्घप्रवासप्रयासः (घ) ।

आत्रे । तत्र महान् अध्ययनप्रत्यूह इति दीर्घप्रवासोऽङ्गीकृतः (ङ) ।

वन । कीदृशः ?

आत्रे । तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्त्तमानं दारकद्वयमुपनीतम् । तत् खलु न केवलमृषीणामपितु सचराचराणां भूतानामान्तराणि तत्त्वानि उपस्नेहयति (च) ।

---

( ३ ) अस्मिन्निति । अस्मिन् दण्डकारण्ये प्रदेशे भूयांसो बहवः उद्गीथं सामवेदान्तर्गतगानविशेषं विदन्तीति तथोक्तास्तद्गीतविद्वांसः अगस्त्यप्रमुखाः अगस्त्यप्रभृतयो मुनयः इत्यर्थः वसन्ति तिष्ठन्ति, तेभ्यः निगमान्तविद्यां वेदान्तविद्यामधिगन्तुमध्येतुं वाल्मीकिपार्श्वात् वाल्मीकेः सकाशादिह दण्डकारण्ये पर्य्यटामि तेषामाश्रममन्विष्य भ्रमामीत्यर्थः । इन्द्रवज्रावृत्तम् ।

( घ ) पुराणः प्राचीनः प्राचीनत्वादिविशेषज्ञः प्रथितः पूजितश्च यो ब्रह्म ब्रह्मविषयकं वाक्यं वदति उपदिशतीति ब्रह्मवादी तं तथोक्तम् । प्रचेतसोऽपत्यं पुमानिति प्राचेतसो वाल्मीकिस्तम् । ब्रह्मणो वेदस्य पारे अयनं गमनं साङ्गोपाङ्गवेदेषु सम्यग्व्युत्पत्तिसाधनमित्यर्थः तस्मै ।

( ङ ) प्रत्यूहो विघ्नः, विघ्नोऽन्तरायः प्रत्यूह इत्यमरः ।

( च ) दारकद्वयं शिशुद्वयम् आन्तराणि तत्त्वानि अन्तरिन्द्रियाणि गूढस्थानानि अन्तर्मर्माणि इत्यर्थः ।

वन। अपि तयोर्नामसंविज्ञानमस्ति ?

आत्रे। तयैव किल देवतया तयोः कुशलवौ इति नामनी प्रभावश्च आख्यातः।

वन। कीदृशः प्रभावः ?

आत्रे। तयोः किल सरहस्यजृम्भकास्त्राणि आजन्मसिद्धानि इति।

वन। अहो नु भोः ! चित्रमेतत्।

आत्रे। तौ च भगवता वाल्मीकिना धात्रीकर्मवस्तुतः परिगृह्य पोषितौ परिरक्षितौ च, वृत्तचौड़कर्मणोश्च तयोः त्रयीवर्जमितरा विद्याः सावधानेन परिनिष्ठापिताः, समनन्तरञ्च गर्भैकादशे वर्षे क्षात्रेण कल्पेन उपनीय तौ त्रयीविद्यामध्यापितौ, न ह्येताभ्यामतिप्रदीप्तप्रज्ञाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति (छ)। यतः

वितरति गुरुः प्राज्ञे विद्यां यथैव, तथा जड़े,
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।
भवति च पुनर्भूयान् भेदः फलं प्रति, तद् यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः॥४॥

---

(छ) त्रयीवर्जं ऋग्यजुः सामेति वेदत्रयं वर्जयित्वा उपनयनात् प्राक् वेदाध्ययनस्य अवैधत्वादिति भावः। स्त्रियाम् ऋक् सामयजुषी इति वेदास्त्रयस्त्रयीत्यमरः। क्षात्रेण कल्पेन क्षात्रेण विधिना। अतिशयेन प्रदीप्ता प्रज्ञा मेधा ययोस्ताभ्यां तथोक्ताभ्याम्।

(४) गुरुरध्यापकः प्राज्ञे प्रज्ञावति शिष्ये यथा विद्यां वितरति ददाति, जड़े अल्पबुद्धावपि शिष्ये तथैव अविशेषेणैव इत्यर्थः वितरति। न तु तयोः प्राज्ञाप्राज्ञयोर्ज्ञाने शास्त्रार्थबोधे शक्तिं सामर्थ्यं करोति जनयति वा खलु वाक्यालङ्कारे। निषेधवाक्यालङ्कारजिज्ञासानुनये खल्वित्यमरः। फलं प्रति पुनः फले पुन-

वन। अयमसौ अध्ययनप्रत्यूहः ?

आत्रे। अपरश्च।

वन। अथ अपरः कः ?

आत्रे। अथ स ब्रह्मर्षिरेकदा मध्यन्दिनसमये नदीं तमसामनुप्रपन्नः, तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानं ददर्श, आकस्मिकप्रत्यवभासाञ्च देवीं वाचमनुष्टुभेन छन्दसा परिणतामभ्युदैरयत् (ज)।

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।

यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ ५ ॥ इति।

वन। चित्रमाम्नायादन्योऽयं नूतनश्छन्दसामवतारः (झ)।

---

रित्यर्थः तयोः भूयान् महान् भेदो विशेषो भवति। तत् तथाहि शुचिः स्वच्छो मणिः दर्पणप्रस्तारादिर्बिम्बोद्ग्राहे प्रतिबिम्बग्रहणे यथा प्रभवति समर्थो भवति मृदां मृत्तिकानां चयः स्तूपः तथा न प्रभवतीत्यर्थः। उपमालङ्कारः। हरिणीवृत्तम्।

(ज) मध्यं दिनस्येति अलुक् षष्ठीसमासः, तदेव समयस्तस्मिन् मध्याह्नसमये इत्यर्थः। युग्मीभूय चरतोः मिथुनभावेन स्थितयोरित्यर्थः। आकस्मिकः अकस्मात् दृष्टकारणं विनापि सम्पद्यमानः प्रत्यवभासः प्रकाशो यस्यास्तां तथोक्ताम्। छन्दसा पद्यरूपेण, छन्दः पद्येऽभिलाषे चेत्यमरः। अभ्युदैरयत् उच्चारयामास।

(५) मा निषादेति। रे निषाद ! त्वं शाश्वतीः निरन्तराः समाः वत्सरान् चिरकालमित्यर्थः प्रतिष्ठां स्थितिमाश्रयमित्यर्थः मा गमः न प्राप्स्यसीत्यर्थः, ब्रह्मपुच्छं प्रतिष्ठा इत्यादिश्रुतेरन्यत्र च काव्यशास्त्रादिषु तथैव प्रदर्शनात्। माङ्योगादतीतप्रयोगो, न अमागमः आर्षोऽयं प्रयोगः। न कदाचित्त्वं निरुद्विग्नमेकत्र वासं प्राप्स्यसीति भावः। यत् यस्मात् त्वं क्रौञ्चमिथुनात् क्रौञ्चाभिधेयवकद्वन्द्वात्, क्रौञ्चः कोंच वक इति भाषा। काममोहितं रममाणमित्यर्थः एकं क्रौञ्चमवधीः हतवान्।

(झ) आम्नायते परम्पराक्रमेण अभ्यस्यते इत्याम्नायो वेदस्तस्मात् तच्छन्दस

आत्रे। तेन खलु पुनः समयेन तं भगवन्तमाविर्भूत-शब्दब्रह्मप्रकाशमृषिमुपसंगम्य भगवान् भूतभावनः पद्मयोनिः अवोचत्, ऋषे! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि, तद् ब्रूहि रामचरितम्, अव्याहतज्योतिरार्षं ते चक्षुः प्रतिभातु, आद्यः कविरसि इत्युक्त्वान्तर्हितः। अथ भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्त्तमितिहासं रामायणं प्रणिनाय (ञ)।

वन। हन्त तर्हि पण्डितः संसारः (ट)।

आत्रे। तस्मादवोचं, तत्र महानध्ययनप्रत्यूह इति।

वन। युज्यते।

आत्रे। विश्रान्तास्मि, भद्रे! सम्प्रति अगस्त्याश्रमस्य पन्थानं ब्रूहि।

वन। इतः पञ्चवटीमनुप्रविश्य (ठ) गम्यतामनेन गोदावरीतीरेण।

---

इत्यर्थः अन्यो भिन्नोऽयं नूतनोऽभिनवश्छन्दसामवतारः प्रकाशः इत्यर्थः। पुराऽनुष्टुप्छन्दसोऽनियतप्रयोगात् सम्यक् शुद्धाभावाच्चास्य नूतनत्वनिर्देशः।

(ञ) आविस् सम्मुखे भूतः शब्दरूपब्रह्मणः प्रकाशः अनुष्टुप्छन्दोरूपेण ब्रह्मणः उदयो यस्मात् तं तथोक्तम्। पद्मं विष्णुनाभिकमलं योनिः उत्पत्तिस्थानं तस्य स तथोक्तः ब्रह्मा इत्यर्थः। प्रबुद्धः प्रकृष्टज्ञानवान्। अव्याहतम् अप्रतिहतं ज्योतिर्यस्य तदृषिसम्बन्धि ते चक्षुः प्रतिभातु। अव्याहतं सत् ते ज्ञानचक्षुषी ज्योतिर्दुरवगाहमप्यर्थं प्रविशतु प्रकाशयतु चेत्यर्थः। अन्तर्हितम् अन्तर्+धा+क्तः। विवर्त्तः परिणामः यदिदं जगत् ब्रह्मणो विवर्त्तः।

(ट) हन्तेति हर्षे, हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोरित्यमरः। तर्हि तदा संसारः पण्डितो जात इति शेषः। अधुना स भगवान् जगदुद्धरणे प्रवृत्तः इति भावः।

(ठ) पञ्चानां वटानां समाहारः पञ्चवटी, समाहारद्विगुः। सा च, अश्वत्थो बिल्ववृक्षश्च वट धात्र्यशोककः। पञ्चैते पञ्चवटीत्युक्तेति। सा विद्यते

आत्रे। [सबाष्पा।] अपि एतत्तपोवनम्? अपि एषा पञ्चवटी? अपि सरिदियं गोदावरी? अपि अयं गिरिः प्रस्रवणः? अपि वनदेवता जनस्थानवासिनी वासन्ती त्वम्? (ङ)।

वास। अस्ति एतत् सर्वम् (ढ)।

आत्रे। वत्से जानकि!

स एष ते वल्लभबन्धुवर्गः प्रासङ्गिकीनां विषयः कथानाम्।
त्वां नामशेषामपि दृश्यमानः प्रत्यक्षदृष्टामिव नः करोति ॥६॥

वास। [सभयं स्वगतम्।] कथं नामशेषामित्याह। [प्रकाशम्।] आर्य्ये! किम् अत्याहितं सीतादेव्याः? (ण)।

आत्रे। न केवलमत्याहितं सापवादमपि।

वास। कथमिव?

आत्रे। [कर्णे।] एवमेवम्।

---

यत्र सापि पञ्चवटी। बाहुल्येनैतद्वटानां विद्यमानत्वात् तद्वनस्य पञ्चवटीति प्रसिद्धिरासीत्।

(ङ) अत्र सर्वत्रैव अपि प्रश्नार्थबोधकमव्ययम्। गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि।

(ढ) अस्तीति सत्तास्वीकारवाचकमव्ययम्। यदात्थ तत्तथैव इत्यर्थः।

(६) प्रसङ्गादुत्थितानां कथानां तव वाक्यानां विषयः प्रतिपाद्यः त्वया एवमेवमित्यादिप्रकारेण वर्णितः सम्प्रति तु प्रत्यक्षविषयीभूत इत्यर्थः स एष ते वल्लभः प्रियो बन्धुवर्गः दृश्यमानः सन् नामैव शेषो यस्यास्तां तथोक्तां नाममात्रावशिष्टां मृतामपीत्यर्थः त्वां नः अस्माकं प्रत्यक्षदृष्टामिव साक्षादुपस्थितामिव करोति। उपजातिवृत्तम्।

(ण) अत्याहितममङ्गलं प्राणहानिरित्यर्थः। अति (अतिशयं)+आ (नीचैः)+धा (स्थापने)+क्त। Deep depression, cause of deep depression. अत्याहितं महाभीतिः कर्म्म जीवानपेक्षि चेत्यमरः।

वास। अहह! दारुणो दैवनिर्घात: (त)। [इति मूर्च्छति।]

वास। हा प्रियसखि! हा महाभागे! ईदृशस्ते निर्माणभाग:। रामभद्र! रामभद्र! अथवा अलं त्वया, आर्य्ये आत्रेयि! अथ तस्मादरण्यात् परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्या: किं वृत्तमिति काचिदस्ति प्रवृत्ति:? (थ)।

आत्रे। नहि नहि।

वास। हा कष्टमार्य्यारुन्धतीवशिष्ठाधिष्ठिते रघुकुलगृहे, जीवन्तीषु च प्रवृद्धराज्ञीषु कथमिदं जातम्?

आत्रे। ऋष्यशृङ्गसत्रे गुरुजनस्तदा आसीत्। सम्प्रति परिसमाप्तं तद् द्वादशवार्षिकं सत्रम्, ऋष्यशृङ्गेण च सम्पूज्य विसर्जिता गुरव:, ततो भगवती अरुन्धती नाहं बधूविरहितामयोध्यां गमिष्यामि इत्याह, तदेव राममातृभि: अनुमोदितम्। तदनुरोधाद्भगवतो वशिष्ठस्य परिशुद्धा वाचो, (द) यथा वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति।

वास। अथ स राजा किमारम्भ: सम्प्रति? (ध)।

---

(त) दैवकृतवज्राघातसदृशोऽयमाघात इत्यर्थ:। निर्घातो विद्युदुल्कादेराघात इत्यमर:।

(थ) ते तव निर्माणस्य सृष्टेर्भागो विधात्राऽवधारितोऽंश ईदृश:? एतद्दहनार्थमेव त्वं सृष्टासीरिति भाव:। सुतरां निर्विवेक: निष्करुणश्च विधातेति अधुना तदुपालम्भनादिना न कोऽपि गुण इति भाव:। प्रवृत्तिर्वार्त्ता। वार्त्ता प्रवृत्तिर्वृत्तान्त इत्यमर:। तद्विषयिणी कापि कथा श्रूयत इत्यर्थ:।

(द) तदनुरोधात् वशिष्ठेनोक्तमित्यर्थ:।

(ध) आरभ्यते क्रियत इत्यारम्भ: कर्म क: आरम्भोऽस्येति किमारम्भ: किंकर्मा कस्मिन् कर्मणि व्यापृत इत्यर्थ:। राजेति हेतुगर्भसाक्षेपोक्ति:।

आत्रे। तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः।

वास। अहह! धिक् परिणीतमपि (न)।

आत्रे। शान्तं पापम्।

वास। का तर्हि यज्ञे सहधर्मचारिणी?

आत्रे। हिरण्मयी सीताप्रतिकृतिः।

वास। हन्त भोः (प)।

वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति॥ ७॥

आत्रे। विसृष्टश्च वामदेवानुमन्त्रितो मेध्योऽश्वः, उपकल्पिताश्च यथाशास्त्रं तस्य रक्षितारः, तेषामधिष्ठाता च

---

(न) सस्त्रीको धर्ममाचरेदिति स्मरणादश्वमेधादिषु च सस्त्रीकस्यैवाधिकारात् अश्वमेधः प्रक्रान्त इति आत्रेयीवचने राज्ञः सस्त्रीकत्वमपि ध्वनितम् अतएवैतद्वासन्तीवचनम्। परिणयान्तरमन्तरेण तादृशयज्ञस्यासम्भवादिति भावः। न केवलं निरपराधा मे प्रियसखी निर्वासिता, दारान्तरोऽपि परिगृहीत इत्याक्षेपः।

(प) हर्षविषादस्मृतिविस्मयोक्तिरियम्। तदेव विवृणोति वज्रादपीत्यादिवक्ष्यमाणश्लोके।

(७) वज्रादिति। वज्रादपि कठोराणि अतिकठिनानि पक्षान्तरे कुसुमादपि मृदूनि मृदुतमानि, यानि सीतायाः पुष्पाघातदुःखमपि सोढुमशक्तानि प्राणेभ्योऽपि प्रियतरां निरतिशयस्नेहभाविनां निर्दोषतया ज्ञातामपि तां भार्यां साधारणजननिन्दया परित्यक्तुं सहानीत्यर्थः लोकोत्तराणामलौकिकगुणवतां महतां जनानां चेतांसि हृदयानि विज्ञातुं विशेषेण ज्ञातुं कः अर्हति योग्यो भवति न कोऽपीति भावः। स्निग्धा सीता विसर्जितेति विषादः, स्निग्धो रामो न निष्करुणः पापकारीति विश्वजनीनप्रवृत्तिरेव प्रमाणमिति न्यायात् निर्दोषामपि साधारणजनविगर्हितां सीतां विहाय महती निःस्वार्थता प्रजावत्सलता न्यायपरता च दर्शिता रामेणेति स्मृतिविषादहर्षविस्मयानां कारणम्।

लक्ष्मणात्मजश्चन्द्रकेतुः दत्तदिव्यास्त्रसम्प्रदायः चतुरङ्गसाधनान्वितोऽनुप्रहितः (फ) ।

राम । [ सस्नेहकौतुकास्रम् । ] कुमारलक्ष्मणस्यापि पुत्त्रः हन्त सातजीवोऽस्मि ।

आत्रे । अत्रान्तरे ब्राह्मणेन मृतं पुत्त्रमुत्क्षिप्य राजद्वारे, सोरस्ताडनमब्रह्मण्यमुद्घोषितं, ततो न राजापराधमन्तरेण प्रजासु अकालमृत्युश्चरतीति आत्मदोषं निरूपयति करुणामये रामभद्रे, सहसैव अशरीरिणी वाक् उदचरत् (ब) ।

शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः ।
शीर्षच्छेद्यः स ते राम ! तं हत्वा जीवय द्विजम् ॥८॥

इति उपश्रुत्यैव कृपाणपाणिः पुष्पकं विमानमारुह्य सर्वा दिशो विदिशश्च (भ) शूद्रतापसान्वेषणाय जगत्पतिः सञ्चरितुमारब्धवान् ।

---

( फ ) अनुमन्त्रितः मन्त्रसंस्कृतः । मेधाय यज्ञाय हितः मेध्यः यज्ञीयः ; मेध+यत् । यद्वा मेध वधे । मेध्यते वध्यते असाविति मेध्यः यज्ञे वध्यः इत्यर्थः अश्वस्तुरङ्गः यज्ञीयतुरङ्ग इत्यर्थः । उपकल्पिता निर्दिष्टा नियोजिता इत्यर्थः । अधिष्ठाता अधि अधिकत्वेन प्रधानत्वेन स्थाता स्थितिशीलः प्रधानपदारूढः । अधिनायकः सेनापतिरित्यर्थः । दत्तः दिव्यानां अस्त्राणां सम्प्रदायः समूहो यस्मै स तथोक्तः तथा चत्वारि अङ्गानि येषां तैस्तथोक्तैः साधनैः उपकरणैः हस्त्यश्वरथपादातरूपसैन्यैरित्यर्थः रक्षणसाधनैरन्वितः अनुगतः अनुप्रहितः प्रेरितः । हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमिति, निवर्तनोपकरणानुव्रज्यासु च साधनमिति चामरः ।

( ब ) अत्र अस्मिन्नन्तरे अवकाशे । उरसो वक्षसस्ताडनेन सहितम् । राज्ञः अपराधस्तम् अन्तरेण विना, अन्तरेणेत्यव्ययं तद्योगेन च 'अन्तराऽन्तरेण युक्तः' इति द्वितीया । उज्ज्वलरूपेण शरीरं नास्ति अस्या इति अशरीरिणी न जिह्वादिसंयोगादुच्चारिता अपितु स्वयमुदचरत् उदतिष्ठत् । देववाणी उद्भूतेत्यर्थः ।

( ८ ) वृषलः शूद्रः । शीर्षस्य मस्तकावच्छेदे छेद्यः कर्तनीयः ।

( भ ) कृपाणपाणिः खड्गहस्तः । कृपाणः खड्गे क्षुरिकाकर्त्र्योरपि योषि-

वास। शम्बूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति, तदपि नाम रामभद्रः पुनरपि इदं (म) वनम् अलङ्कुर्य्यात्।

आत्रे। भद्रे! गम्यतेऽधुना।

वास। एवमस्तु, कठोरीभूतोऽयं दिवसः (य)।

तथाहि

कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि-
र्घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम्।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः॥८॥

---

नीति मेदिनी। पुष्पकं पुष्पकनामकं प्रसिद्धं विमानं व्योमयानम्। विमानोऽस्त्री व्योमयानमित्यमरः। विदिशः पूर्वदक्षिणादेरन्तर्वर्त्तिन्यो दिशः। दिशो मध्ये विदिक् स्त्रियामित्यमरः।

(म) अपि चत्र सम्भावनायाम्। गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि इत्यमरः। द्वितीयमपि समुच्चयार्थकम्।

(य) प्रचण्डातपतापादतिदुःसह इत्यर्थः।

(८) कण्डूलेति। कूले गोदावरीतीरे स्थिता इति शेषः तथा छायायामपस्किरमाणाः कीटनिष्कोषणार्थं तरुवल्कलेषु चञ्च्वाघातं कुर्वन्त इत्यर्थः ये विष्किराः पक्षिणः। खगे विहङ्ग इत्याद्यारभ्य नगौको वाजि विकिर वि विष्किर पतत्त्र इत्यमरः। तैर्मुखैः करणैर्व्याकृष्टा आकर्षणेन बहिष्कृताः कीटाः याभ्यस्तथोक्तास्त्वचो वल्कलानि येषां ते तथोक्ताः तथा कूजन्ति शब्दं कुर्वन्ति क्लान्ताश्चातपतापात् खेदमुपगतानि कपोतानां कुक्कुटानाञ्च कुलानि येषु ते तथोक्ताः कुलायद्रुमाः विहगावासभूततरवः। कुलायस्तु पुमान् स्थानमात्रे स्यात् पक्षिवासके इति मेदिनी। कण्डूयुतानां द्विपगण्डपिण्डानां करिकपोलभागानां, द्वाभ्यां मुखनासाभ्यां पिबन्तीति द्विपाः हस्तिनः। दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप इत्यमरः। कषणेन घर्षणेन यः उत्कम्पः कम्पनं तेन, सम्पातिभिः समूहेन पतद्भिः तथा घर्मेण आतपेन,संस्रितानि, विश्लेषितानि, बन्धनानि

इति परिक्रम्य निष्क्रान्ते।

विष्कम्भक: (र)।

तत: प्रविशति सदयोद्यतखड्गो रामभद्र:।

राम:। रे हस्त दक्षिण! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम्।
रामस्य गात्रमसि दुर्वहगर्भखिन्न-
सीताविवासनपटो: करुणा कुतस्ते? ॥१०॥

[अथ कथञ्चित् प्रहृत्य (ल)।] कृतं रामसदृशं कर्म (व), अपि जीवेत् स ब्राह्मणशिशु:? (श)।

[प्रविश्य दिव्यपुरुष:।] जयति जयति देव:।
दत्ताभये त्वयि यमादपि दण्डधारे
सञ्जीवित: शिशुरयं, मम चेयमृद्धि:।

---

वृन्तानि येषां तैस्तथोक्तै: स्वकुसुमै:। घर्म: स्यादातपे ग्रीष्मेऽप्युष्म स्वेदाम्बुसीरपीति मेदिनी। गोदावरीं अर्चन्ति पूजयन्ति। अर्चन्तीति भ्वादिगणीयार्चधातो: प्रयोग:। वृत्तं शार्दूलविक्रीड़ितम्।

(र) वर्णितानां वर्णनीयानाञ्च कथानामंशत: सङ्क्षेपतश्च निर्देशो विष्कम्भ:। स च अङ्कादौ प्रयोज्य:। तथाहि, वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शक:। सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शित इत्यादि साहित्यदर्पणे।

(१०) जीवातवे पुनरुज्जीवनाय। जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे इति मेदिनी। रामस्येति, त्वं दुर्वहगर्भभारमन्थराया: सीताया निर्वासनसमर्थस्य रामस्य गात्रम् अङ्गम् असि भवसि, ते तव करुणा दया कुत:? अतिकठिनस्य रामस्याङ्गत्वात्त्वयि करुणा न सम्भाव्यते एवेति भाव:। वसन्ततिलकं वृत्तम्।

(ल) दयार्द्रचित्ततया अतिकष्टेनेत्यर्थ:।

(व) अहं यादृश: क्रूरस्तादृशं क्रूरं कर्म कृतवानित्यर्थ:।

(श) यदि न जीवति तदा वृथेदं हत्याकर्म इत्याशङ्कावचनमेतत्।

(११) दत्तेति। यमात् कृतान्तादपि दत्तम् अभयं येन स तथोक्ते भयनिवारके इत्यर्थ: मृतस्य शिशो: सञ्जीवनात् मम चोद्धारात् त्वं यमादपि परि-

शम्बूक एष शिरसा चरणौ नतस्ते,
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥ ११ ॥

रामः । इयमपि प्रियं नः, तदनुभूयतामुग्रस्य तपसः परिपाकः (ष) ।

यत्रानन्दाश्च, मोदाश्च, यत्र पुण्याश्च सम्पदः ।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते ध्रुवाः ॥१२॥

शम्बू । युष्मत्पादप्रसादोपाय एष महिमा, (स) किमत्र तपसा । अथवा महदुपकृतं तपसा (ह) ।

---

वाणे मम इति भावः । कुतो यस्मादप्यभयप्रदत्वमिति तद्दर्शयति, त्वयि दण्डं धारयति दण्डं विदधतीति तस्मिन् तथोक्ते सति अयं शिशुर्ब्राह्मणपुत्रः सञ्जीवितः मम च इयम् ऋद्धिः समुन्नतिः । एष एवं देवत्वप्राप्तिहेतुकत्वादुपकृत इत्यर्थः शम्बूकोऽहं शिरसा ते तव चरणौ नतः नमस्कृतवानित्यर्थः । नाहं ते उपकारी प्रत्युत संहारकत्वादपकारक एव तत् कुतः अप्रियकारिणि एवं विनय इत्याह । सदिति । सत्सङ्गजानि साधुसंसर्गजातानि निधनान्यपि मरणान्यपि तारयन्ति उद्धारकारणानि भवन्तीत्यर्थः । साधुकृतं सर्वमेव कर्म हिताय भवतीति भावः । वसन्ततिलकं वृत्तम् ।

( ष ) परिपाकः फलम् ।

( १२ ) यत्र लोकेषु आनन्दाः ब्रह्मानन्दविशेषा इत्यर्थः । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन । मोदाः प्रमोदाः ब्रह्मणि प्रीतिविशेषा इत्यर्थः, यत्र च पुण्याः पवित्राः न पार्थिववत् कलुषिता इत्यर्थः सम्पदः, विराजो ब्रह्मण इमे ते वैराजा नाम ते तैजसाः तेजोमया नित्यालोकसम्पन्ना इत्यर्थः लोकाः ब्रह्मलोका इति यावत् । ते तव सम्बन्धे ध्रुवाश्चिरपरिभोगयोग्याः सन्तु भवन्तु । एवम्भूतं ते तपसः फलमस्त्विति भावः । अनुष्टुप्वृत्तम् ।

( स ) युष्मत्पादानां युष्माकमित्यर्थः यः प्रसादः अनुग्रहस्तस्मादुपायः आगमो यस्य स तथोक्त एष महिमा । कथितपदप्राप्तिरूपमाहात्म्यं युष्मदनुग्रहेणैव लभ्यं न तपसः फलमिति भावः ।

( ह ) अथवा पक्षान्तरे तपस एवैतत् फलं यत्तवात्रागमनमिति तपसा महोपकारः कृतः ।

अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि।
क्रान्त्वा प्राप्तः स इह तपसां सम्प्रसादोऽन्यथा चेत्
क्वायोध्यायाः पुनरुपगमो दण्डकायां वने वः? ॥१३॥

रामः। किं नाम दण्डकेयम्? [सर्वतोऽवलोक्य।] आं, (च)

स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः,
स्थाने स्थाने मुखरककुभो झाङ्कृतैर्निर्झराणाम्।

---

(१३) तदेव विवृणोति, अन्वेष्टव्य इति। भुवने स्वर्गमर्त्यपातालात्मके त्रिजगति भूतानां प्राणिनां नाथः पतिः अतएव शरण्ये रक्षणे साधुस्त्रितापात्मकसंसारात् परित्राणार्थमाश्रयणीय इत्यर्थः। शरणं रक्षणे गृहे इति वैजयन्ती। अतएव अन्वेष्टव्यः यत्नतः साक्षात्करणीयः मनुष्यरूपेण साक्षान्नारायणस्त्वमित्यर्थः वृषलकं शूद्राधमं, अनादरे कः। मामन्विष्यन् साक्षात्कुर्वन् योजनानां शतानि क्रान्त्वा अतिक्रम्य इह अस्मिन् प्रदेशे यत् प्राप्तोऽसि आगतोऽसि, स तपसा तपोनिमित्तक इत्यर्थः सम्प्रसादः भवदनुग्रहः अन्यथा चेत् तन्नो चेदित्यर्थः वो युष्माकमन्वेष्टव्यानामित्यर्थः अयोध्यायाः शतयोजनदूरवर्त्तिन्याः दण्डकाया वने दण्डकारण्ये पुनरुपगमः रावणादिवधानन्तरं पुनरागमनं क्व कुतः, न सम्भवेदेवेत्यर्थः। अतस्तपस एवैतत् फलं यदन्वेष्टव्योऽपि भवान् मया इह प्राप्त इति भावः। मन्दाक्रान्तावृत्तम्।

(च) अनुभूतस्यापि अतिस्मृतस्य द्रव्यस्य चिह्नदर्शनादिना यत् स्मरणं तत्प्रतिपादकमिदम्। आं प्रगृह्य स्मृतौ वाक्येऽपीत्यमरः।

(१४) स्निग्धेति। क्वचित् कुत्रचित् दिशि स्निग्धाः मधुराः नयनप्रीतिकरा इत्यर्थः यथा स्यात् तथा श्यामाः श्यामवर्णाः, अपरतः अन्यस्यां दिशि भीषणो यः आभोगः पूर्णता असीमविस्तार इत्यर्थः तेन रूक्षाः अस्निग्धाः नयनक्लान्तिकरा इत्यर्थः, तथा स्थाने स्थाने निर्झराणां झाङ्कृतैर्झर्झरशब्दैर्मुखराः ध्वनिताः ककुभः दिशो येषां ते तथोक्ताः, दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता इत्यमरः। तथा तीर्थानि भूमिजलादेः प्रभावाद्यद्भुतस्थानानि। प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसां परिग्रहान्मुनीनाञ्च देशानां तीर्थता स्मृता॥ आश्रमाः मुनीनां निवासाः, गिरयः पर्वताः, सरितो नद्यः, गर्ता

एते तीर्थाश्रमगिरिसरिद्गर्त्तकान्तारमिश्राः
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥ १४ ॥

शम्बू। दण्डकेयमत्र किल निवसता देवेन,
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम्।
त्रयश्च दूषणखरत्रिमूर्द्धानो रणे हताः ॥ १५ ॥

येन सिद्धक्षेत्रेऽस्मिन् (क) जनस्थाने मादृशानामपि भीरुजानपदानामकुतोभयः (ख) सञ्चारी जातः।

रामः। न केवलं दण्डकेयं, जनस्थानमपि।

शम्बू। वाढमेतानि खलु सर्वभूतलोमहर्षणानि उन्मत्तचण्डश्वापदकुलसङ्कुलगिरिगह्वराणि जनस्थानपर्य्यन्तानि दीर्घारण्यानि (ग) दक्षिणां दिशमभिवर्त्तन्ते।

---

खाताः। धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः॥ इति। कान्ताराः दुर्गमवर्त्मानि, महारण्ये दुर्गमपथे कान्ताराः पुन्नपुंसकमित्यमरः। तैर्मिश्रा मिश्रिता युक्ता इति यावत् परिचिताः पूर्वदृष्टा भुवः स्थानानि येषां ते तथोक्ता एते सम्मुखस्था इत्यर्थः दण्डकारण्यस्य भागाः अंशाः प्रदेशा इत्यर्थः संदृश्यन्ते विलोक्यन्ते मयेति शेषः। मन्दाक्रान्तावृत्तम्।

(१५) दूषणश्च खरश्च त्रिमूर्द्धा च शेषोक्तः त्रिशिरा इति नाम्ना प्रसिद्धः ते तथोक्ताः। अनुष्टुप्वृत्तम्।

(क) येन दूषणखरादिराक्षसनिधनेनेत्यर्थः। सिद्धानाम् अणिमादिसिद्धमुनिविशेषाणां चैव स्थानं तस्मिन्।

(ख) नास्ति कुतोऽपि कारणात् भयं यस्मिन् सञ्चारे सः।

(ग) वाढमिति स्वीकारसूचकमव्ययम् ओम् एवमित्यादिवत्। सर्वेषां भूतानां प्राणिनां लोमानि हर्षयन्तीति लोमहर्षणानि भयङ्कराणीत्यर्थः, उन्मत्तानि अतएव चण्डानि उग्रतराणि यानि श्वापदानां हिंस्रपशूनां कुलानि जातयः तैः सङ्कुला आकीर्णाः, सङ्कीर्णं सङ्कुलाकीर्णं इत्यमरः। गिरिगह्वरा येषां तानि तथोक्तानि, जनस्थानं पर्य्यन्तः शेषसीमा येषां तानि तथोक्तानि, दीर्घारण्यानि दण्डकारण्यानि इत्यर्थः।

तथाहि

निष्कूजस्तिमिताः क्वचित् क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्य्यकैरजगरस्वेदद्रवः पीयते ॥ १६ ॥

रामः। पश्यामि च जनस्थानं भूतपूर्वखरालयम्।
प्रत्यक्षानिव वृत्तान्तान् पूर्वाननुभवामि च ॥१७॥

[सर्वतोऽवलोक्य।] सर्वथा प्रियारामा हि वैदेही आसीत्, एतानि तानि नाम कान्ताराणि, किमतः परं भयानकं स्यात् (घ)।

---

(१६) क्वचित् कुत्रचित् प्रदेशे निष्कूजाः पक्ष्यादीनामपि ध्वनिरहिताः स्तिमिता निश्चलाश्च। एतेन सिंहव्याघ्रादिश्वापदसञ्चारो व्यन्यते। क्वचिदपि प्रोच्चण्डा आमिषालाभाद्रौद्रतराः सत्त्वानां श्वापदानां स्वनाः शब्दा यासु तास्तथोक्ताः, क्वचिच्च स्वेच्छया सुप्तास्तथा गभीरा अपरिमेया भोगाः शरीराणि येषां ते तथोक्ता ये भुजगा अजगराः, भोगः सुखे धने चाहेः शरीरफणयोरपीति विश्वः। तेषां श्वासैर्विषमयैरित्यर्थः प्रदीप्ताः प्रज्वलिता अग्नयो यासु तास्तथोक्ताः, तथा प्रदराणां भूविदाराणां विदीर्णभूखण्डानामित्यर्थः उदरेषु मध्येषु गर्त्तमध्येषु इत्यर्थः विलसत् स्वल्पमम्भो जलं यासु ताः, प्रदरो रोगभेदे स्यात् विदारे शरभङ्गयोरिति मेदिनी। तथोक्ताः सीमानो भागा इत्यर्थः विद्यन्ते इति शेषः। एतेन भुवः प्रचण्डातपतापशुष्कत्वं व्यज्यते। यासु सीमसु इत्यर्थः तृष्यद्भिः पिपासार्त्तैः प्रतिसूर्य्यकैः कृकलासैरजगराणाम् आतपक्लान्त्या निद्रितानां पूर्वोक्तानां वृहत्सर्पाणामित्यर्थः स्वेदद्रवः घर्मवारि, ।स्वेदस्तु स्वेदने घर्मे इति मेदिनी। पीयते। शार्दूलविक्रीड़ितं वृत्तम्।

(घ) आ विशेषेण रम्यते अस्मिन् इत्यारामः उपवनं (आ+रम+घञ्) प्रियः आरामो यस्याः सा तथोक्ता वनदर्शनोत्सुका इत्यर्थः। आरामः स्यादुपवनं कृत्रिमं वनमेव यदित्यमरः। अत्र लक्षणया वनमात्रम् बोद्धव्यम्। कान्ताराणि महारण्यानि, कान्तारोऽस्त्री महारण्ये विले दुर्गमवर्त्मनीति मेदिनी।

सास्रम्।

त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु।
इति हा रमते सीता स स्नेहस्तस्याः स तादृशः ॥ १८ ॥
अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥१९॥

शम्बू। तदलमेभिर्दुरासदैः। अथैतानि मदकलमयूरकण्ठकोमलच्छविभिरवकीर्णानि पर्यन्तैः अविरलनिविष्टनीलबहलच्छायतरुषण्डमण्डितानि असम्भ्रान्तविविधमृगयूथानि पश्यतु महानुभावः प्रशान्तगम्भीराणि मध्यमारण्यकानि (ङ)।

---

एतानि तानि सीतया सह मया च प्रीत्या दृष्टानि इत्यर्थः किं वस्तु अतः परम् एभ्यः अधिकं भयानकं स्याद्भवेत्। सीतां विना अद्य सकलमेव तत् दुःखास्पदमिति भावः।

(१८) त्वयेति। अहं त्वया सह मधुगन्धिषु कुसुममधुसुरभिषु वनेषु निवत्स्यामि, न मे राज्यादिसुखेषु प्रयोजनमिति भावः इति उक्त्वेत्यर्थः हा शोकावेगसूचकध्वनिः सीता रमते आनन्दं प्रकाशितवती। तस्याः स स्नेहः मयि प्रीतिस्तादृशः आसीदिति शेषः। मदेकसुखा सीता आसीदिति भावः।

(१९) अकिञ्चिदिति। न किञ्चित् सुखकरं कुर्वाणोऽपि प्रियजनः केवलं सौख्यैः दर्शनस्पर्शनसम्भाषणादिमात्रजनितैः सुखप्रवाहैरिति भावः। अकारणेनैव सुखजनकत्वेनेत्यर्थः दुःखानि शरीरित्वादपरिहार्य्यान् संसारसन्तापानित्यर्थः अपोहति निवारयति। तत् तस्मात् यो जनः यस्य प्रियः स हि तस्य किमपि अद्भुतमनिर्वचनीयमित्यर्थः द्रव्यं वस्तु।

(ङ) अथ रामस्य उत्कण्ठां लक्षयित्वा सा च वनस्य कठोरताजनितेति बुद्ध्वा पुनस्तदुपशमार्थं कठोरतां परित्यज्य स्निग्धत्वं वर्ण्यते तदित्यादिभिर्वक्ष्यमाणवचनैः। तदिति। तत् तस्मात् एभिः दुःखमासाद्यते एभिरिति दुरासदैर्दुःखोत्पादकैर्जीवानामातपक्लान्त्यादिसूचकैर्वनविवरणैरित्यर्थः अलं निष्प्रयोजनम्। अथ पुनर्वाक्यारम्भे पश्यतु महाभाग एतानि प्रशान्तगम्भीराणि मध्यमारण्यानि। प्रशान्तत्वं गम्भीरत्वञ्च ख्यापयति। मदेति। मदेन

इह समदशकुन्ताक्रान्तवानीरवीरुत्-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ २० ॥

अपि च । दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।
शिशिरकटुकषायः स्त्यायते शल्लकीनाम्
इभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ २१ ॥

---

हर्षेण कृत्वा मधुरं केकारवं कुर्वन्तः ये मयूरास्तेषां प्रफुल्लानामित्यर्थः ये कण्ठास्तद्वत् कोमला सुन्दरी छविः कान्तिर्येषां तैस्तथोक्तैः पर्यन्तैः परिसरैः अवकीर्णानि व्याप्तानि, तथा अविरलं सान्द्रं निबिडं यथा तथा निविष्टा स्थिता अतएव नीलेन बहुला गाढश्यामा प्रगाढा इत्यर्थः छाया येषां ते तथोक्तास्तरवश्च नवीनाश्च समाधिकवीर्य्यादिदत्त्वान्मनोहरा इत्यर्थः ये तरुषण्डा महीरुहश्रेष्ठास्तैर्मण्डितानि भूषितानि, तथा असम्भ्रान्तानि भयादर्शकत्वात् स्वच्छन्दचराणि विविधानां मृगाणां पशूनां यूथानि येषु तानि तथोक्तानि ।

(२०) इह अस्मिन् प्रदेशे जनस्थानस्थभागे इत्यर्थः समदैः सहर्षैः शकुन्तैः पक्षिभिः आक्रान्तानाम् अधिष्ठितानां वानीरवीरुधां वेतसलतानां प्रसवैः पुष्पैः सुरभीणि सुगन्धीनि शीतानि शीतलानि स्वच्छानि निर्मलानि तोयानि जलानि यासां तास्तथोक्ताः, तथा फलभराणां फलसमूहानां परिणामाद्धेतोः श्यामाः श्यामवर्णाः ये जम्बूनिकुञ्जास्तेभ्यः स्खलनेन पतनेन मुखराणि शब्दायमानानि भूरीणि स्रोतांसि बहवः प्रवाहा यासां तास्तथोक्ताः, निर्झरिण्यो नद्यो वहन्ति गच्छन्ति । अत्र फलानां परिणामः कुञ्जानां श्यामत्वे फलानां पतने च हेतुः । मालिनीवृत्तम् ।

(२१) दधतीति । अत्र अस्मिन्नरण्यप्रदेशे कुहरभाजां गह्वरस्थितानां भल्लूकयूनां तरुणभल्लूकानाम्, अनुरसितेन प्रतिध्वनिना गुरूणि द्विगुणितानि इत्यर्थः अम्बूकृतानि सनिष्ठीवध्वनयः, भल्लूका हि शौर्य्यादिवशात् निष्ठीवनसहितं ध्वनिं कुर्वन्ति । अम्बूकृतं सनिष्ठीवमित्यमरः । स्त्यानं दार्ढ्यं दधति । अपरभल्लूक-शब्दशङ्कया क्रोधात् अविरतं थुत्कारसहितं ध्वनिं कुर्वन्तीति भावः । तथा शल्लकीनां वृक्षविशेषाणां शिशिरः शीतलः कटुस्तीव्रः कषायः सुरभिश्च, कटुतिक्त-

रामः। [सवाष्पस्तम्भम्।] भद्र! शिवास्ते पन्थानो, देवयानं प्रतिपद्यस्व पुण्येभ्यो लोकेभ्यः (च)।

शम्बूकः। यावत् पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि। [इति निष्क्रान्तः।]

रामः। एतत्तदेव हि वनं पुनरद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः।
आरण्यकाश्च गृहिणश्च रताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः॥ २२॥

अपि च। एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि।

---

कषायास्तु सौरभे च प्रकीर्तिता इति हलायुधः। तथा दुर्भैर्हस्तिभिर्मदस्राविभिरित्यर्थः। दन्तीत्याद्यारभ्य इभः स्तम्बेरमः पद्मीत्यमरः। दलिता मर्दिता विकीर्णा परितो विक्षिप्ताश्च या ग्रन्थयः पर्वाणीत्यर्थः तासां निष्यन्दस्य निस्रवस्य रसस्येत्यर्थः गन्धः स्यायते वर्द्धते मदगन्धैर्मिश्रितः सन् द्विगुणीभूय परितः प्रसरतीति भावः। एतदपि रामस्य मनःप्रसादनार्थं वर्णितम्। मालिनीवृत्तम्।

(च) रामस्य तु सीताविरहशोकावेगः एभिरपि शम्बूकवचनैर्न उपशमितः, अपितु एकाग्रतया वर्द्धित एवेति स कथञ्चिद्वाष्पं स्तम्भयित्वा अश्रूणि विसृजति शिवा इति। ते तव पन्थानः शिवाः सुखजनकाः सन्त्विति शेषः, पुण्येभ्यः पवित्रेभ्यो लोकेभ्यः स्वर्गलोकेभ्यः इत्यर्थः आगतमिति शेषः, देवयानं रथं प्रतिपद्यस्व प्राप्नुहि आरोहेत्यर्थः।

(२२) एतदिति। तदेव प्रियया सह पूर्वं सुखेनाध्युषितम् अद्य पुनः दुःखकरमित्यर्थः एतद्वनम् अद्य पुनर्दृष्टम्। यस्मिन् वने इत्यर्थः पुरा पूर्वं चिरमेव बहुकालं व्याप्येत्यर्थः वयं सीता लक्ष्मणः अहञ्चेत्यर्थः वसन्तः कृतनिवासा अतएव स्वधर्मे रता गृहिणश्च गृहस्थाश्च आरण्यका वानप्रस्थाश्च सन्तः सांसारिकेषु एकदैव मनुष्यजन्मलभ्येषु सर्वेषु सुखेषु इत्यर्थः रसज्ञा अभूम आस्वादज्ञा आसन्। अत्रास्माकं सुखभोगानां परा काष्ठा जाता इति भावः। शृङ्गारादौ जले वीर्ये सुवर्णे विषशुक्रयोः। आस्वादे च रसं प्राहुरिति शब्दार्णवः। वसन्ततिलकं वृत्तम्।

आमञ्जुवञ्जुललतानि च तान्यमूनि
नीरन्ध्रनीलनिचुलानि सरित्तटानि ॥ २३ ॥
मेघमालेव यश्चायमारादपि विभाव्यते ।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी ॥२४॥
अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु ।
गोदावर्याः पयसि विनतश्यामलानोकहश्री-
रन्तःकूजन् मुखरशकुनो यत्र रम्यो वनान्तः ॥२५॥

---

(२३) एत इति । त एव पूर्वपरिचिता इत्यर्थः एते गिरयः पर्वताः । तान्येव पूर्वदृष्टानीत्यर्थः मत्ताः प्रफुल्ला हरिणा येषु तानि तथोक्तानि वनस्थलानि । तानि च भ्रमणादिनोपभुक्तानीत्यर्थः अमूनि सम्मुखवर्त्तीनि आ सम्यक् मञ्जवो मनोहरा वञ्जुललता अशोकलता येषु तानि तथोक्तानि, वञ्जुलोऽशोके इत्यमरः । नीरन्ध्रा निरवकाशा निविड़ा इति यावत् नीला नीलवर्णा निचुला वानीरा जलवेतस इति यावत् येषु तानि तथोक्तानि । वानीरे कविभेदे स्यान्निचुलः स्थलवेतस इति शब्दार्णवः । सरितस्तटानि दृश्यन्ते इति शेषः । वसन्ततिलकं वृत्तम् ।

(२४) आरादपि समीपादपि । आरादित्यव्ययम् । आराद्दूरसमीपयोरिति विश्वः । अनुष्टुप्वृत्तम् ।

(२५) अस्यैव गिरेः प्रस्रवणस्येत्यर्थः महति विशाले शिखरे शृङ्गे, शिखरोऽस्त्री द्रुमाग्रेऽद्रिशृङ्गे पुलककक्षयोरिति मेदिनी । गृध्राणां दाक्षिणात्यानां शकुनि इति भाषा । राजा गृध्रराजः तस्य, राजाहः सखिभ्यष्टजिति टच्-प्रत्ययः । गरुड़ात्मजस्य पितृसखस्यातपूजितस्य जटायुष इत्यर्थः वास आसीदिति शेषः । तस्य तद्वासस्याधस्तान्निम्नप्रदेशे वयमपि तेषु पूर्वाध्युषितेषु पर्णोटजेषु पत्रनिर्मितकुटीरेषु रताः स्थिताः । यत्र यस्मिन् प्रदेशे गोदावर्याः पयसि विनतानां फलभरावनतानां श्यामलानामनोकहानां वृक्षाणां श्रीः शोभा यस्मिन् स तथोक्तः, तथा मुखराः शब्दायमानाः शकुनाः पक्षिणः, शकुन्तिपक्षिशकुनि-शकुन्तशकुनद्विजा इत्यमरः । येषु स तथोक्तः अतएव अन्तर्मध्ये कूजन् प्रतिध्वनित इत्यर्थः रम्यः सुदृश्यसुश्राव्यसुसेव्यत्वादिना मनोहर इत्यर्थः वनान्तो वनम्, अन्तः स्वरूपे नाशे ना स्त्री शेषे अन्तिके त्रिषु इति मेदिनी । दृश्यते इति शेषः । मन्दाक्रान्तावृत्तम् ।

आ, तदत्रैव सा पञ्चवटी, यत्रातिचिरनिवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः (छ) प्रदेशाः, प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता प्रतिवसति, तत् किमिदमापतितमद्य रामस्य (ज)। सम्प्रति हि

चिरोद्वेगारम्भी प्रसृत इव तीव्रो विषरसः
कुतश्चित् संवेगात्प्रचित इव शल्यस्य शकलः।
व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुन-
र्घनीभूतः शोको विकलयति संमूर्च्छयति च ॥२६॥

तथापि तान् पूर्वसुहृदो भूमिभागान् पश्यामि। [निरूप्य।] अहो अनवस्थितो भूमिसन्निवेशः (झ)। तथाहि

---

(छ) आ इत्यभिज्ञाने। विविधानां नानाप्रकाराणां विस्रम्भाणां विश्वासजनितानां अतिप्रसङ्गानां लज्जासङ्कोचादिवर्जितविलक्षणप्रेमालापविहारादीनां साक्षिणः द्रष्टारः आधारभूता इत्यर्थः।

(ज) का विपदुपस्थितेयमित्यर्थः।

(२६) चिरोद्वेगेति। चिरादुद्वेगं हृदयदाहमारभत इति चिरोद्वेगारम्भी सर्पकुक्कुरादिविषयस्येव कालान्तरपरिणामीत्यर्थः तीव्रः अत्युग्रः विषरसः विषद्रवः, रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे इति विश्वः। प्रसृत इव सर्वावयवेषु व्याप्त इव। शल्यस्य अस्त्रविशेषस्य शकलः खण्डः, शकलं त्वचि खण्डे स्याद्रागवस्तुनि वल्कल इति मेदिनी। कुतश्चित् स्थानादागत्येति यावत्। संवेगादतिवेगात्प्रचित इव अन्तः प्रविष्ट इव। हृदेव मर्म जीवनस्थानं तस्मिन् रूढो जातः ग्रन्थिः स्फोटबन्धः पुनः संहित इत्यर्थः व्रणः पुनः स्फुटित इव यस्य स तथोक्तः व्रणः स्फोटकः स्फुटित इव विदीर्ण इव। यद्वा हृन्मर्मणि रूढग्रन्थिः जातसन्धिः कदाचिद्विदारणानन्तरम्। एवं पुनर्घनीभूतः पूर्वापेक्षया पुनः सान्द्रीभूतः सम्प्रवृद्ध इत्यर्थः शोकः प्रियाविरहजं दुःखं मां विकलयति व्याकुलीकरोति संमूर्च्छयति च सम्मोहयति विवशं करोतीत्यर्थः। सम्प्रतीत्यस्य सर्वैरेव वाक्यैः सहान्वयः। शिखरिणीवृत्तम्।

(झ) पूर्वपरिचितानित्यर्थः। अवस्थान्तरित इत्यर्थः। भूमिसंस्थानं भूमिभाग इत्यर्थः। पुरा यादृशं भूमिसंस्थानं दृष्टं अधुना न तथा अवस्थितमित्यर्थः।

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढ़यति ॥२७॥

हन्त परिहरन्तमपि (ञ) मामितः पञ्चवटीस्नेहो बलादपकर्षतीव । [ सकरुणम् । ]

यस्यां ते दिवसास्तया सह मया नीता यथा स्वे गृहे
यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयते ।
एकः सम्प्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा, गच्छत्वसम्भाव्य वा ॥२८॥

---

( २७ ) पुरा यत्र सरितां नदीनां स्रोतः प्रवाहः आसीदिति शेषः, अधुना तत्र पुलिनं सैकततटमस्तीति शेषः । क्षितिरुहां वृक्षाणां घनविरलभावो विपर्य्यासं वैपरीत्यं यातः । घनतास्थाने विरलत्वं विरलतास्थाने घनत्वं सञ्जातमित्यर्थः । बहोः कालात् परमित्यर्थः दृष्टमिदं वनम् अपरमिव अन्यद् वनमिव मन्ये अनुभवामि । कथं नेदमपरं कथं वा पूर्वदृष्टमिदमिति निर्णय इत्याह निवेश इति । शैलानाम् अनतिपरिवर्त्तनत्वात् पूर्वावस्थानामित्यर्थः निवेशः संस्थानं कर्त्तृ इदं तद् वनमिति बुद्धिं द्रढ़यति दृढ़ीकरोति । अन्यथा ज्ञानानुपपत्तिरिति भावः । शिखरिणीवृत्तम् ।

( ञ ) परिहरति त्यजतीति :परिहरन्तं त्यजन्तम् । इमां पञ्चवटीं परित्यज्य गच्छन्तमपीत्यर्थः ।

( २८ ) यस्यामिति । यस्यां पञ्चवट्यामित्यर्थः स्वे गृहे यथा स्वीयगृहे इव, यद् वा यथा तथैवैवं साम्ये इत्यमरः । ते दिवसाः तथाविधसुखदिनानीत्यर्थः तया मत्प्रियया सह मया नीता यापिताः, दीर्घाभिः प्रशंसा बाहुल्याद्विस्तारिताभिर्यत्सम्बन्धिकथाभिर्यत्पञ्चवटीकथाभिर्या पञ्चवटी तया मया च इति शेषः आस्थीयते आद्रियते । सम्प्रति नाशिता नाशार्थं विसृष्टेत्यर्थः प्रियतमा प्राणेभ्योऽपि प्रियतरा भार्य्या येन स तथोक्तः अतएव अद्य एकः प्रियाविरहित इत्यर्थः पापः पापात्मा रामः तां चिरसहचरीभूतामित्यर्थः पञ्चवटीं कथं वा विलोकयतु कथं वा असम्भाव्य असमादृत्य गच्छतु प्रियायाः सम्बन्धवत्तात्तदादृतत्वाच्च प्रिया पञ्चवटी, अतः सा सुखकरी, किन्तु यत्सम्बन्धवत्वात् पञ्चवटी

[ प्रविश्य। शम्बूकः। ] जयति देवः। देव! भगवानगस्त्यो मत्तः श्रुतभवत्सन्निधानः (ट) त्वामाह, परिकल्पितविमानावतरणमङ्गला (ठ) प्रतीक्षते वत्सला लोपामुद्रा, सर्वे च महर्षयस्तदेहि सम्भावयास्मान्, (ड) अथ प्रजविना (ढ) पुष्पकेण स्वदेशमुपसङ्गम्याश्वमेधाय सज्जो भविष्यसीति।

रामः। यथाज्ञापयति भगवान्।

शम्बूः। इतस्तर्हि देवः प्रवर्त्तयतु पुष्पकम्।

रामः। भगवति पञ्चवटि! गुरुजनानुरोधात् क्षम्यतामतिक्रमो (ण) रामस्य।

शम्बूः। देव! पश्य पश्य।

कूजत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः।

---

प्रिया सा मृता, अत सा दुःखकरीत्येकैव पञ्चवटी तद्दर्शनेन सीतास्मरणकारणतया दुःखाय च सुखाय च भवतीति अत्रावस्थानमतीगमनं वै तदुभयमपि अशक्यं रामस्येति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

(ट) मत्तः मन्मुखादित्यर्थः श्रुतं भवतः सन्निधानं तव अत्रागमनमित्यर्थः येन स तथोक्तः।

(ठ) परिकल्पितानि गृहीतानि विमानादवतरणकालोचितमङ्गलानि मङ्गलद्रव्याणि मङ्गलजनकदूर्वाक्षतादिवस्तूनि यया सा तथोक्ता।

(ड) आगमनेन सम्मानयेत्यर्थः।

(ढ) प्रकृष्टो जवो विद्यते यस्य तेन महावेगवतेत्यर्थः।

(ण) अतिक्रमः विनयातिक्रमः।

(२८) कूजन्तीनां शब्दायमानानां कुञ्जकुटीरकौशिकघटानां कुञ्जस्थितपेचककुलानां, कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः। कोषज्ञोलूकयोश्चैव विश्वामित्रमुनावपीति मेदिनी। ये घुत्कारा घुह इत्याकारका रवास्तदन्तसङ्घिश्लिष्टा ये कीचकस्तम्बाः वंशविशेषगुच्छाः ( स्तम्बः—झाड़ इति भाषा )। कीचको दैत्यभिद् वाताहतसस्वनवंशयोरिति मेदिनी। तेषाम् आड़म्बरेण वादितशब्देन, ते हि कीचकवंशाः सुषैः स्वनन्त्यनिलोद्धता इति छिद्रान्तर्गतघुत्कारशब्दादुत्थित-

एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु कुम्भीनसाः ॥२९॥

अपिच

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दक्षिणाः ।
अन्योऽन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥ ३० ॥

इति निष्क्रान्ताः सर्वे ।

इति पञ्चवटीप्रवेशो नाम

द्वितीयोऽङ्कः ।

---

क्रोधकशब्देनेत्यर्थः । आडम्बरस्तु दर्पे स्याद्धर्षे तूर्य्यस्वनेऽपि च । आयोजने च संरम्भ आरम्भे घनगर्जिते ॥ इति कोषः । मूकाः वाशानिःशब्दानि कौकुलि-कुलानि वायसमूहा यस्मिन् स तथोक्तोऽयं क्रौञ्चावती नाम गिरिः विद्यते इति शेषः । एकदृग् बलिभुग् ध्वाङ्क्षो कौकुलिर्वायसोऽन्यभृदिति मेदिनी । एतस्मिन् गिरौ प्रचलताकितस्ततो धावतां प्रचलाकिनां मयूराणां, प्रचलाकिशितापाङ्ग-शिखावलगतश्रता इति त्रिकाण्डशेषः । कूजितैः शब्दैः उद्वेजिता उद्वेगं प्रापिताः व्याकुला इति यावत् कुम्भीनसाः सर्पविशेषाः, कुम्भीनसः क्रूरसर्पे स्त्रियां लवण-मातरीति मेदिनी । पुराणचन्दनतरुस्कन्धेषु उद्वेल्लन्ति पलायनार्थं चञ्चलाः सन्तः ऊर्द्ध्वं गच्छन्तीत्यर्थः । उत्पूर्वकभ्वादिगणीयवेल्लधातोः प्रयोगः । रोहि-णतरुष्विति पाठे रोहिणतरुषु वटवृक्षेषु । शार्दूलविक्रीड़ितं वृत्तम् ।

( ३० ) एत इति । कुहरेषु गह्वरेषु गद्गदं यथा तथा नदतीति तत्तथोक्तम् अव्यक्तं अव्यक्तशब्दवदित्यर्थः गोदावर्य्या वारि जलं येषु ते तथोक्ताः गोदावरी-जलकल्लोलितकुहराः, मेघैः आलम्बिता आश्रिता मौलयः शिरांसि येषां ते तथोक्ता अतएव नीलानि शिखराणि श्यामशृङ्गाणि येषां ते तथोक्ताः एतेन तेषां मह-दौन्नत्यं सौन्दर्य्यञ्च सूचितं, ते एते पूर्वानुभूता दक्षिणा दक्षिणदिग्वर्त्तिनः क्षोणी-भृतः पर्वताः सन्ति । तथा अन्योन्यप्रतिघातेन परस्पराघातप्रतिघातेन सङ्कुलं ससंक्षोभं यथा तथा चलन्तो गच्छन्तो ये कल्लोलास्तरङ्गास्तेषां कोलाहलैः कलकल-शब्दैः उत्ताला उत्कटाः, उत्ताल उत्कटे श्रेष्ठे विकराले प्लवङ्गमे इति मेदिनी । गभीरमगाधं पयो येषां ते तथोक्ताः पुण्याः पवित्राः सरित्सङ्गमाः नदीसन्नि-पाताः । शार्दूलविक्रीड़ितं वृत्तम् ।

# अथ तृतीयोऽङ्कः ।

ततः प्रविशति नदीद्वयं तमसा मुरला च ।

तमसा । सखि मुरले ! किमसि सम्भ्रान्तेव ?

मुरला । भगवति तमसे ! प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुं, जानास्येव यथा वधूत्यागात् प्रभृति,

अनिर्भिन्नो गभीरत्वादन्तर्गूढ़घनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ १ ॥

तेन च तथाविधेष्टजनकष्टपातजन्मना (क) प्रकर्षगतेन

---

(१) अनिर्भिन्न इति । गभीरत्वात् गाम्भीर्य्यात् गाम्भीर्य्यातिशयवशादित्यर्थः अन्तर् अन्तःकरणे गूढ़ा गुप्ता घना अतिशयिता व्यथा पीड़ा यस्य स किन्तु अनिर्भिन्नः मनसो निर्भेदं न गतः अप्रकाशित इत्यर्थः रामस्य करुणो रसः सीतावियोगजन्यशोकसम्भार इत्यर्थः, पक्षे गभीरत्वात् अतिनिम्नतलस्थितत्वात् अन्तर्मध्ये गूढ़ा गुप्ता घना अतिशयिता व्यथा निर्भिद्य बहिर्गमनार्थमभिघातो यस्य स तथोक्तः अनिर्भिन्नः पात्रान्निर्भेदं न गतः अप्रकाशित इत्यर्थः, अतएव पुटे अन्तर्निरुद्धमृदादिपाकपात्रे पाकः अग्निज्वालया पचनं यस्य स तथोक्तः सन् प्रतिकाशते प्रतिभातीति तथोक्तः पुटे पच्यमान इत्यर्थः रसः पारदः इव जातः अन्तरे दह्यमानस्य पारदस्य सन्ताप इव रामस्य मनसः सन्तापातिशय इति भावः । अत्र रसशब्दस्य श्लिष्टत्वात् श्लेषनामालङ्कारः । रसस्य करुणविप्रलम्भाख्यः शृङ्गारः अङ्गित्वेन वर्त्तते, विप्रलम्भे रतिः स्थायी पुनः सम्भोगहेतुक साहित्यदर्पणात् ।

(क) तथाविधस्तादृश इष्टजने प्रियजने यः कष्टस्य अनिष्टस्य पातः पतनं संघटनमिति यावत् तस्मात् जन्म उत्पत्तिर्यस्य तेन सीतानिर्वासनसम्भवेनेत्यर्थः ।

दीर्घशोकसन्तानेन (ख) सम्प्रति अतितरां परिक्षीणो रामभद्रः, तमवलोक्य कम्पितमिव (ग) मे हृदयम्, अधुना च प्रतिनिवर्त्तमानेन रामभद्रेण नियतमेव पञ्चवटीवने वधूसहनिवासविस्रम्भसाक्षिणः (घ) प्रदेशा द्रष्टव्याः, तेषु च निसर्गधीरस्यापि एवंविधायामवस्थायाम् अतिगम्भीराभोगशोकक्षोभसंवेगात् (ङ) पदे पदे महान्ति प्रमादस्थानानि शङ्कनीयानि (च) रामभद्रस्य, तद्भगवति गोदावरि ! तत्र त्वया सावधानया भवितव्यम् ।

वीचीवातैः शीकरक्षोदशीतैराकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं स्वैरं स्वैरं प्रेषितैस्तर्पयेति ॥ २ ॥

---

(ख) दीर्घेण बहुकालव्यापिना शोकसन्तानेन निरवच्छिन्नशोकपरम्परयेत्यर्थः ।

(ग) रामस्यानिष्टाशङ्कयेति भावः ।

(घ) वध्वा सीतया सार्द्धं सहनिवासे एकत्रावस्थाने यो विस्रम्भः स्वच्छन्दचेष्टितं तस्य साक्षिणो द्रष्टारः, निर्जनत्वात् सीतारामयोः परस्परमसङ्कुचितचेष्टितानि यत्र अभूवन्नित्यर्थः ।

(ङ) अतिगम्भीरः प्रगाढ़ः आभोगः प्रसरो यस्य तादृशो यः शोकस्तेन यः क्षोभः मर्मणि आघातस्तस्य संवेगात् प्राबल्यात् ।

(च) प्रमादस्थानानि, प्रमादः अनवधानता कर्त्तव्याकर्त्तव्यबुद्धिराहित्यं महदनिष्टमिति यावत्तस्य स्थानानि उत्पत्तिस्थानानि कारणानीति यावत् । शङ्कनीयानि सम्भावनीयानि । रामस्य महान्ति अनिष्टानि सम्भविष्यन्तीत्यनुमन्यामहे इति भावः ।

(२) वीचीति । शीकराणामम्बुकणानां क्षोदेन चूर्णसम्पर्केण शीतैः शीतलैः पद्मकिञ्जल्कगन्धान् कमलकेशरसौरभान् आकर्षद्भिः आकृष्य वहद्भिः स्वैरं स्वैरं मन्दं मन्दं यथा स्यात् तथा प्रेषितैः प्रेरितैः तव वीचीवातैस्तरङ्गवायुभिः रामभद्रस्य जीवं जीवनं मोहे मोहे प्रतिमुग्धावस्थायां तर्पय पोषय । विधौ लोट् । इतीति मुरलासुखेन अगस्त्यपत्न्या वाक्यसमाप्तिसूचकमव्ययम् । वृत्तं [illegible]ालिनी ।

तम। उचितमेव दाक्षिण्यं स्नेहस्य, सञ्जीवनोपायस्तु मौलिक एव रामभद्रस्याद्य सन्निहितः (छ)।

मुर। कथमिव ?

तम। श्रूयताम्। पुरा किल वाल्मीकितपोवनोपकण्ठात् परित्यज्य गते लक्ष्मणे, सीतादेवी प्राप्तप्रसववेदना आत्मानम् अतिदुःखसंवेगाद्गङ्गाप्रवाहे निक्षिप्तवती, तदैव तत्र दारकद्वयं प्रसूता, भगवतीभ्यां पृथ्वीभागीरथीभ्यां अभ्युपपन्ना रसातलञ्च नीता, स्तन्यत्यागात् परेण च तद्दारकद्वयं तस्याः, प्राचेतसस्य महर्षेर्गङ्गादेवी स्वयमर्पितवती (ज)।

मुर। सविस्मयम्।

ईदृशानां विपाकोऽपि जायते परमाद्भुतः।
यत्रोपकरणीभावमायात्येवंविधो जनः॥ २॥

तम। इदानीन्तु शम्बूकवृत्तान्तेनानेन सम्भावितजनस्थानागमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी,

---

(छ) दाक्षिण्यम् आनुकूल्यम्। मौलिकः मूलीभूतः रामस्यैतादृशशोकमोहादिकस्य यत् मूलं कारणं तदेव अद्य शोकमोहादेरपनोदनकारणं रामस्य निकटवर्त्तीत्यर्थः। सीता अद्य रामस्य अतिनिकटे वर्त्तते इति भावः।

(ज) उपकण्ठात् समीपात्। प्रसूता प्रसूतवती, कर्त्तरि क्तः। अभ्युपपन्ना अनुगृहीता। तस्याः सीतायाः। प्राचेतसस्य वाल्मीकेः। परस्वत्वोत्पादकसम्प्रदानाभावात् षष्ठीनिर्देशः न चतुर्थी।

(२) ईदृशानामिति। ईदृशानां रामसदृशपरमाद्भुतचरितानामित्यर्थः विपाकोऽपि दशाविपर्य्ययोऽपि परमाद्भुतः असाधरण इत्यर्थः। यत्र विपाके एवंविधः पृथ्वीभागीरथीवाल्मीकिसदृशो जनः उपकरणीभावम् उपकारित्वम् आयाति प्राप्नोति उपकरणार्थं सहायो भवतीत्यर्थः।

यदेव भगवत्या लोपामुद्रया स्नेहादाशङ्कितं तदेवाशङ्क्य सीतासमेता, केनचिदिव गृहाचारव्यपदेशेन (झ) गोदावरीं विलोकयितुमागता।

मुर। सुविचिन्तितं भगवत्या, राजधानीस्थितस्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्य्यैर्व्यापृतस्य नियताश्चित्तविक्षेपाः, अव्यग्रस्य पुनरस्य (ञ) शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ इति, तत् कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात्।

तम। उक्तमेव भगवत्या भागीरथीदेव्या, यद्देवयजनसम्भवे सीते, अद्य खलु आयुष्मतोः कुशलवयोर्द्वादशजन्मसंवत्सरस्य संख्यामङ्गलग्रन्थिरभिवर्त्स्यते, (ट) तदात्मनः पुराणश्वशुरम् एतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व। न च त्वामवनिपृष्ठवर्त्तिनीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति, किं पुनर्मर्त्त्या इति, अहञ्च आज्ञापिता, तमसे! त्वयि प्रकृष्टप्रेमैव वधूर्वत्सा जानकीति, अतस्त्वमेवास्याः प्रत्यन्तरीभवेति, (ठ) साहमधुना यथादिष्टमनुतिष्ठामि।

---

(झ) गृहाचारव्यपदेशेन गृहकर्मच्छलेन।

(ञ) आभ्युदयिकैरुन्नतिसाधकैः बहुभिः प्रजाहितकरव्यापारैरित्यर्थः। चित्तस्य विक्षेपाः विविधदिक्षु क्षेपाः बहुधा नियोगाः प्रजाकार्य्येषु एव व्यापृतत्वमित्यर्थः। नियताः निश्चिताः अवश्यम्भाविनः अतः शोके न अवकाश इति भावः। अव्यग्रस्य पुनः, सम्प्रति अविक्षिप्तचित्तस्येत्यर्थः।

(ट) संख्यार्थः वयःकालनिरूपणार्थः मङ्गलार्थश्च हस्ते धारणीये सूत्रे ग्रन्थिः यस्मिन् स संख्यामङ्गलग्रन्थिः वयःसंख्यार्थग्रन्थिबन्धनावसर इत्यर्थः अद्य प्राप्तः।

(ठ) पुराणश्वशुरं पुरा भवं श्वशुरकुलानां प्राक्तनं श्वशुरं श्वशुराणाम् आदि-

सुर । अहमप्यमुं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि, रामभद्रोऽप्यागत एवेति तर्कयामि ।

तम । तदियं गोदावरीह्रदान्निष्क्रम्य ।

परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकवरीकमाननम् ।
करुणस्य मूर्त्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी ॥ ४ ॥

सुर । इयं हि सा ।

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ५ ॥

---

पुरुषमित्यर्थः । मानवस्य मनोरुद्भूतस्य । द्रक्ष्यन्ति द्रष्टुं शक्ष्यन्ति । प्रत्यन्तरीभव सहचारिणीभव ।

(४) परिपाण्ड्वित्यादि । परिपाण्डू दुर्भरप्रियपरित्यागशोकाभिभवात् पाण्डुवर्णौ दुर्बलौ च क्षीणौ च कपोलौ गण्डौ यस्मिन् तत् तथोक्तं तथापि सुन्दरं मनोहरं तथा विलोला संस्काराभावात् श्लथलम्बिनी कवरी केशपाशः यस्मिन् तत् तथोक्तम् आननं मुखं दधती धारयन्ती जानकी जनकनन्दिनी सीता करुणस्य शोकस्य मूर्त्तिः आकृतिरिव मूर्त्तिमान् शोक इवेत्यर्थः अथवा शरीरिणी मूर्त्तिमती विरहव्यथेव वनमेति आगच्छति । वृत्तं मञ्जुभाषिणी ।

(५) शरदिजः शरत्कालभवः घर्मः आतपः, घर्मः स्यादातपे ग्रीष्मेऽप्युष्मस्वेदाम्भसोरपीति मेदिनी । केतक्याः केतकवृक्षस्य गर्भपत्रं कुसुममध्यगतदलमिव, हृदयं कुसुममिव तत् शोषयतीति तथोक्तः दारुणः दुःसह इत्यर्थः दीर्घशोकः दीर्घकालव्यापी शोकः प्रियविरहजः सन्तापः मुग्धं मनोहरं बन्धनात् वृन्तात् विप्रलूनं विच्छिन्नं किसलयं नवपल्लवमिव अस्याः सीतायाः परिपाण्डु पाण्डुवर्णं क्षामं कृशं शरीरं, ग्लपयति ग्लानिं प्रापयति । वृत्तं मालिनी ।

इति परिक्रम्य निष्क्रान्ते । विष्कम्भकः ।

[ नेपथ्ये । ] प्रमादः प्रमादः (ड) ।

ततः प्रविशति पुष्पावचयव्यग्रहस्ता (ढ) सकरुणौत्सुक्यमाकर्णयन्ती सीता ।

सीता । अह्महे, जाणामि पिअसही मे वासन्दी वाहरदि (१) ।

पुनर्नेपथ्ये ।

सीतादेव्याः स्वकरकलितैः शल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा पोषितोऽभूत् ।

सीता । किं तस्स (२) ।

पुनर्नेपथ्ये ।

वध्वा सार्द्धं पयसि विहरन् सोऽयमन्येन वेगा-
दुद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः ॥ ६ ॥

---

( १ ) अहो, जानामि प्रियसखी मे वासन्ती व्याहरति ।

( २ ) किं तस्य ?

---

( ड ) प्रमादः अनिष्टापातः ।

( ढ ) पुष्पाणां कुसुमानामवचये चयनकार्य्ये व्यग्रौ व्यापृतौ हस्तौ यस्याः सा तथोक्ता ।

( ६ ) पुरा पूर्वस्मिन् काले अग्रे सम्मुखे लोलः पल्लवग्रहणार्थं चञ्चलः यः करिकलभकः हस्तिशावकः, कलभकोऽत्र शावकमात्रवाचकः । सीतादेव्याः स्वकरकलितैः स्वहस्तेन अवचितैः शल्लकीनां तदाख्यानां वृक्षविशेषाणां पल्लवाग्रैः अग्रपत्रैः पोषितः पालितः अभूत् सोऽयं करिकलभकः वध्वा सार्द्धं निजस्त्रिया सह पयसि जले विहरन् क्रीड़न् अन्येन अपरेण केनचित् उद्दामेन उच्छृङ्खलेन मत्तेनेत्यर्थः द्विरदपतिना गजपतिना वेगात् जवेन, दर्पादिति पाठे बलगर्वात् सन्निपत्य कुतोऽपि समागत्य अभियुक्तः आक्रान्तः । मन्दाक्रान्ता वृत्तम् ।

सीता। [ससम्भ्रमं कतिचित्पदानि गत्वा।] अज्जउत्त! परित्ताहि परित्ताहि मम तं पुत्तअं। [विचिन्त्य।] हद्धी हद्धी ताइं ज्जेव चिरपरिचिताइं अक्खराइं पञ्चवटीदंसणेण मं मन्दभाइणीं अणुरुन्धन्ति, (ण) हा अज्जउत्त! (३) [इति मूर्च्छति।]

[प्रविश्य तमसा।] वत्से! समाश्वसिहि समाश्वसिहि।

[नेपथ्ये।] विमानराज अत्रैव स्थीयताम्।

[सीता। समाश्वस्यससाध्वसोत्कम्पोल्लासम्।] अह्मइ (त) जलभरिदमेहत्थणिदगम्भीरमंसला कुदो णु एसा भारदी? णिग्घोसभरन्तकण्णविवरं मंपि मन्दभाइणीं झत्ति उस्सावेदि (४)।

[तम। सस्मितास्रम्।] अयि वत्से!

---

(३) आर्य्यपुत्त! परित्रायस्व परित्रायस्व मम तं पुत्रकम्। हा धिक् हा धिक् तान्येव चिरपरिचितानि अक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनी-मनुरुध्यन्ते, हा आर्य्यपुत्र!

(४) अहो जलभृतमेघस्तनितगम्भीरमांसला कुतो नु एषा भारती? निर्घोषभ्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटिति उच्छ्वासयति।

---

(ण) ससम्भ्रमं ससाध्वसम्। सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपीति मेदिनी। अक्षराणि मन्मुखोच्चारितानि पदानीत्यर्थः, अनुरुध्यन्ते अनुसरन्ति। अभ्यासवशात् अधुनापि उच्चरन्ति।

(त) जलभृतस्य जलपूर्णस्य मेघस्य स्तनितमिव गर्जितमिव, गम्भीरा धीरा मांसला वीर्य्यवती एषा भारती वाणीत्यर्थः नु वितर्के कुतः कस्मात् प्रभावात् उत्पन्नेत्यर्थः। झटिति शीघ्रम् उच्छ्वासयति जीवयति रामदर्शने आशां जनयतीति भावः।

किमव्यक्तोऽसि निनदे कुतस्त्येऽपि त्वमीदृशी ।
स्तनयित्नोर्मयूरीव चकितोत्कण्ठिता स्थिता ॥ ७ ॥

सीता । भअवदि ! किं भणासि अपरिप्फुड़त्ति । मए उण सरसंजोएण पच्चभिआणिदं, अज्जउत्तो ज्जेव वाहरदि (५) ।

तम । श्रूयते, तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा जनस्थानमागत इति ।

सीता । दिट्ठिआ अपरिहीणराअधम्मो क्खु सो राआ (६) ।

नेपथ्ये ।

यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम् ।
एतानि तानि बहुनिर्झरकन्दराणि
गोदावरीपरिसरस्य गिरेस्तटानि ॥ ८ ॥

---

(५) भगवति ! किं भणसि अपरिस्फुटेति । मया पुनः स्वरसंयोगेन प्रत्यभिज्ञातम्, आर्य्यपुत्र एव व्याहरति ।

(६) दिष्ट्या अपरिहीनराजधर्मः खलु स राजा । दिष्ट्या भाग्येन अपरिहीनः अपरित्यक्तः राजधर्मो येन स तथोक्तः यथाशास्त्रमनुष्ठितराजकार्य्यः, दैववशात् विरहविधुरोऽपि राजधर्मान्न विचलित इत्यर्थः ।

---

(७) किमिति । स्तनयित्नोर्मेघस्य, अभ्रं मेघो वारिवाहः स्तनयित्नुर्वलाहक इत्याद्यमरः । निनदे शब्दे मयूरी इव कुतस्त्ये कस्मादपरिज्ञातस्थानादागतेऽपि अव्यक्ते अपरिस्फुटे कस्यायमिति अनिश्चिते निनदे, विमानराज अत्रैव स्थीयतामित्येवंरूपे शब्दे इत्यर्थः किं कथम् ईदृशी चकिता चञ्चला उत्कण्ठिता उत्सुका च स्थिता ।

(८) यत्रेति । यत्र तटेषु द्रुमा वृक्षा अपि, तथा मृगाः पशवोऽपि मे मम बन्धवः बहुकालमेकत्रावस्थानाद् प्रणयिनः, यानि तटानि प्रियया सह चर-

सीता। [दृष्ट्वा।] हा कधं पहादचन्दमण्डलावण्डुरपरिक्खामदुव्वलेण आआरेण, अअं सोम्मगम्भीराणुभावमेत्तपच्चभिआणिदो अज्जउत्तो ज्जेव, ता मं धारेहि (७)।

इति तमसामाश्लिष्य मूर्च्छति।

[तमसा धारयन्ती।] वत्से! समाश्वसिहि समाश्वसिहि।

नेपथ्ये।

अनेन पञ्चवटीदर्शनेन।
अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः।
उत्पीड़ इव धूमस्य मोहः प्रागावृणोति माम् ॥८॥

---

(७) हा कथं प्रभातचन्द्रमण्डलापाण्डरपरिक्षामदुर्बलेनाकारेण, अयं सौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञात आर्य्यपुत्र एव, तन्मां धारय। प्रभातचन्द्रमण्डलमिवापाण्डरो धूसरवर्णः, परिक्षामोऽतिकृशस्तथा दुर्बलश्च य आकारस्तेन उपलक्षित इति शेषः, सौम्येन गम्भीरेण धीरेण अनुभावमात्रेण ज्ञापकेन आकारविशेषेण प्रत्यभिज्ञातो प्रकृष्टं विदितः।

---

तीति तथोक्तः प्रियया सीतया सहेत्यर्थः चिरं बहुकालम् अध्यवात्सम्। कर्मक्रियाविशेषणाभिनिविशाधिशीङ्स्थानस्वध्युपावस उढं डौ इति अधिपूर्ववसतेः कर्मत्वं तेन च द्वितीया। बहवो निर्झरा जलप्रवाहा येषु ते तथोक्ताः कन्दरा गर्त्ता येषु तानि तथोक्तानि एतानि तानि पूर्वपरिचितानीत्यर्थः गोदावर्य्या नद्याः परिसरस्य प्रान्तवर्त्तिन इत्यर्थः गिरेः पर्वतस्य तटानि प्रदेशाः। उत्सः प्रस्रवणं वारिप्रवाहे निर्झरो झर इत्यमरः। वसन्ततिलकं वृत्तम्।

(८) अन्तरिति। अन्तः अन्तःकरणे लीनस्य गूढं स्थितस्य अद्य अधुना उद्दामं त्वरितं सर्वमाच्छाद्य धग् धगिति घोररावं ज्वलिष्यतः दुःखाग्नेः शोकानलस्य धूमस्योत्पीड़ इव घनीभूतः धूमराशिरिव मोहः मां मम चैतन्यमित्यर्थः आवृणोति आच्छादयति, अतिशयेन शोकाभिभूतोऽस्मीत्यर्थः।

हा प्रिये जानकि!।

राम। [स्वगतम्।] इदं तदाशङ्कितं गुरुजनेनापि।

सीता। [समाश्वस्य।] हा! कहं एदं (८)।

[पुनर्नेपथ्ये।] हा देवि! दण्डकारण्यवासप्रियसखि! विदेहराजपुत्रि! [इति मूर्च्छति।]

सीता। हद्धी हद्धी मं मन्दभाइणिं उद्दिसिअ आमीलन्तणेत्तणीलुप्पलो मुच्छिदो ज्जेव, हा हा कहं धरणीवट्टे णिरुस्साहणीसहं विपल्हत्थो, (थ) भअवदि तमसे! परित्ताहि परित्ताहि जीवावेहि अज्जउत्तम् (६)। [इति पादयोः पतति।]

राम। त्वमेव ननु कल्याणि। सञ्जीवय जगत्पतिम्।
प्रियस्पर्शो हि पाणिस्ते तत्रैव नियता भव॥१०॥

---

(८) हा! कथमिदम्।

(६) हा धिक् हा धिक् मां मन्दभागिनीमुद्दिश्य आमीलन्नेत्रनीलोत्पलो मूर्च्छित एव, हा हा! कथं धरणीपृष्ठे निरुत्साहनिःसहं विपर्य्यस्तः, भगवति तमसे! परित्रायस्व परित्रायस्व जीवय आर्य्यपुत्रम्।

---

(थ) आमीलती मुद्रिते नेत्रे नीलोत्पले इव यस्य सः तथोक्तः मुद्रितनयन इत्यर्थः। निरुत्साहात् निरतिशयशोकावेगेन उत्साहभ्रंशात् वैक्लव्यवशात् निःसहम् अक्षमस्ववशमित्यर्थः यथा तथा विपर्य्यस्तः निपतितः।

(१०) ननु भोः कल्याणि! शुभे! त्वमेव जगत्पतिं विलीनं राममिति शेषः सञ्जीवय करस्पर्शादिना सचैतन्यं कुरु। एष रामरुक्प्रतीकारस्त्वयैव साध्यो नान्ययेत्येवकारार्थः। कथं मयैव साध्यो न च त्वया इत्याशङ्क्याह, प्रियस्पर्श इति। हि यतः ते तव पाणिः करः प्रियः स्पर्शो यस्य स तथोक्तः रामाभिज्ञातत्वात् त्वद्वियोगार्त्तस्य तस्य चैतन्यसम्पादक इत्यर्थः। तस्मादित्यूह्यं तत्रैव पाणिना स्पर्शे एव नियता व्यापृता भव। नियतो भवः इति पाठे नियतः

सीता। जं भोदु तं भोदु, जधा भअवदी भणादि (१०)।

ससम्भ्रमं निष्क्रान्ता।

ततः प्रविशति भूमौ निपतितः साश्रया सीतया स्पृश्यमानः साह्लादोच्छ्वासी रामभद्रः।

सीता। [ किञ्चित्सहर्षम् आत्मगतम् (द)। ] जाणे पुणोवि पच्चागदं विअ जीविदं तेल्लोअणाहस्स (११)।

रामः। हन्त भोः किमेतत्।

प्रश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीड़ितेन्दुकरकन्दलजो नु सेकः।
आतप्तजीवनमनःपरितर्पणो मे
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः॥ ११॥

---

(१०) यद्भवतु तद्भवतु, यथा भगवती भणति।
(११) जानामि पुनरपि प्रत्यागतमिव जीवितं त्रिलोकनाथस्य।

---

निश्चितः भवः सञ्जीवनं, निरतो जन इति पाठे निरतः अभ्यस्तः तत्रैव नियतः अनुध्यानशीलः अयं जन इत्यर्थः। यदर्थमेष एतादृशः सोत्कण्ठः करस्पर्शेन तामनुभूय पुनरेवोज्जीविष्यतीति भावः।

(द) आत्मगतं मनोगतमित्यर्थः, पाठकपरिज्ञानार्थमेव हि तस्य नाटके लेखनं वस्तुतस्तु मनोगतो भावः। स च भावः मन्दमुच्चारणीयः। तथाहि। अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतमिति दर्पणम्।

(११) प्रश्च्योतनमिति। नु इति सर्वत्रैव वितर्के। किमेतदिति पूर्वेणान्वयः। किं नु एतद् हरिचन्दनपल्लवानां तन्नामवृक्षविशेषस्य किसलयानाम्, अङ्गुलिस्पर्शद्योतनार्थं पल्लवपदग्रहणम्। प्रश्च्योतनं द्रवः रस इति यावत्, अलौकिककारणं व्यतिरेकेण कुतोऽयमलौकिकसुखसम्भव इति भावः। वृक्षविशेषपल्लवरसाद् वा कथमेषा सुखोत्पादसम्भावनेत्याह निष्पीड़ितेति। निष्पीड़ितः रसार्थं करेण आमर्दितः य इन्दुकरकन्दलः सुधांशुरश्मिसमूहः तस्माज्जायत इति तथोक्तः सेकः रसधारापतनं नु, मन्ये सुधांशुकिरणानि एकत्रीकृत्य

स्पर्शः पुरा परिचितो नियतं स एष
सञ्जीवनश्च मनसः परिमोहनश्च ।
सन्तापजां सपदि यः प्रतिहत्य मूर्च्छा-
मानन्दनेन जड़तां पुनरातनोति ॥ १२ ॥

सीता । [ससाध्वसोत्कम्पमपसृत्य (म) । ] एत्तिकं ज्जेव दाणिं मे बहुदरं (१२) ।

रामः । [उपविश्य । ] न खलु वत्सलया सीतादेव्या अभ्युपपन्नोऽस्मि ? (न) ।

---

(१२) एतावदेव इदानीं मे बहुतरम् ।

---

केनचिदामर्द्य रसोऽयं निःसारितः अन्यथा अमृतस्य कुतः सम्भव इति भावः । आतप्तयोः सन्तापदग्धयोर्जीवनमनसोः परितर्पणः सम्यक् सुखदः, सञ्जीवयतीति सञ्जीवनः ओषधेः कस्याश्चित् लतायाः रसः हृदि हृदये प्रसिक्तः प्रक्षिप्तो नु, अन्यथा व्यथापगमात् कुतोऽयं दग्धजीविते सुखोत्पत्तिरिति भावः । अत्र प्रकृत-वस्तुनो ज्ञानाभावाद्रामस्य सन्देहः न प्रतिभोत्थितः अपितु प्रकृतः सन्देह एव इति न सन्देहालङ्कारः प्रकृते अप्रकृतवस्तुनः प्रतिभोत्थितसन्देहस्यैवालङ्कारत्वात् । तथाच साहित्यदर्पणम्, सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थित इति । वसन्त-तिलकं वृत्तम् ।

(१२) स्पर्श इति । पुरा पूर्वकाले नियतम् अभीक्ष्णं परिचितः अभ्यस्तः मनसः सञ्जीवनः उत्साहप्रदः परिमोहनश्च आनन्दसम्भारात् मोहोत्पादकः चित्त-द्रुतिकारकः इत्यर्थः स एव स्पर्शः, यः सन्तापजां सीतावियोगजन्यां मूर्च्छां मोहं सपदि तत्क्षणात् झटितीत्यर्थः प्रतिहत्य निवार्य्य पुनः आनन्दनेन सुखोत्पादनेन जड़तां सुखजां मूर्च्छामित्यर्थः आतनोति करोति । वसन्ततिलकं वृत्तम् ।

(म) ससाध्वसकरुणमिति पाठे भयशोकसहितम् ।

(न) सीतादर्शनाभावात् विस्मयोक्तिरियम् । वत्सलया स्नेहशीलया, अभ्युपपन्नः अनुगृहीतः ।

सीता। हद्धी हद्धी किं त्ति मं अज्जउत्तो मग्गिस्सदि (१३) (प)।

रामः। भवतु, पश्यामि।

सीता। भअवदि तमसे! ओसरह्म, जइ दाव मं पेक्खिस्सदि, ततो अणव्भणुसादसण्णिधाणेण अहिअं पि मम महाराओ कुविस्सति (१४)।

तम। अयि वत्से! भागीरथीवरप्रभावाद् वनदेवतानामपि अदृश्या संवृत्तासि।

सीता। आं, अत्थि एदं (१५)।

राम। हा प्रिये जानकि! ननु प्रिये जानकि!

सीता। [समन्युगद्गदम् *।] अज्जउत्त! असरिसं क्खु एदं वअणं इमस्स वुत्तन्तस्स। [सास्रम्।] अहवा किं त्ति वज्जमइं जम्मन्तरेसु वि पुणो असम्भाविदटुल्लहदंसणं मं ज्जेव मन्दभाइणीं उद्दिसिअ वच्छलस्स एवं वादिणो अज्जउत्तस्स उवरि णिरणुक्कोसा भविस्सं, अहं एदस्स हिअअं आणामि मम एसोत्ति (१६) (फ)।

---

(१३) हा धिक् हा धिक् किमिति मामार्य्यपुत्रो मार्गिष्यति।

(१४) भगवति तमसे! अपसरामः, यदि तावन्मां प्रेक्षिष्यते, तदा अननुज्ञातसन्निधानेन अधिकमपि मम महाराजः कोपिष्यति।

(१५) आं, अस्ति इदम्।

(१६) आर्य्यपुत्र! असदृशं खलु एतद्वचनमस्य वृत्तान्तस्य। अथवा

---

(प) मार्गिष्यति अन्विष्यति।

* समन्युगद्गदं सशोकस्खलितं यथा तथा। मन्युरत्र शोकः, मन्युः शोके क्रतौ क्रुधीत्यमरः।

(फ) असदृशमिति। आर्य्यपुत्र! एतद्वचनं हा प्रिये जानकीति सस्नेह-

रामः । [ सर्वतो विलोक्य सनिर्वेदम् । ] हा ! न काचित् अत्र ।

सीता । भअवदि तमसि ! णिक्कारणपरिच्चाइणीवि एदस्स एदिणा एवंविधेण दंसणेण कीदिसो मे हिअआणुबन्धोत्ति (व) ण आणामि ण आणामि (१७) ।

तम । जानामि वत्से ! जानामि ।

तटस्थं नैराश्यादपि च कलुषं विप्रियवशात्
वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव ।
प्रसन्नं सौजन्याद‌पि तु करुणैर्गाढ़करुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव ॥ १२ ॥

---

किमिति वज्रमयीं जन्मान्तरेषु अपि पुनरसम्भावितदुर्लभदर्शनां मामेव मन्द-भागिनीमुद्दिश्य वत्सलस्य एवंवादिन आर्य्यपुत्रस्य उपरि निरनुक्रोशा भविष्यामि, अहमेतस्य हृदयं जानामि ममापि एष इति ।

(१७) भगवति तमसे ! निष्कारणपरित्यागिनोऽप्येतस्य एतेन एवंविधेन दर्शनेन कीदृशो मे हृदयानुबन्ध इति न जानामि न जानामि ।

---

सम्भाषणम् अस्य वृत्तान्तस्य निर्दयनिर्वासनरूपव्यापारस्य असदृशमयोग्यम् । अथ-वेति । अथवा पक्षान्तरे वज्रमयीं वज्रनिर्मितां वज्रसदृशकठिनामित्यर्थः अन्यथा कथं निर्वासनानन्तरमपि न मृतास्मीति भावः जन्मान्तरेष्वपि परजन्मस्वपि पुनरसम्भावितं दुर्लभं दर्शनं रामदर्शनं यस्याः तां तथोक्तां मन्दभागिनीं मामेव उद्दिश्य वत्सलस्य स्नेहवतः एवंवादिनः प्रिये जानकीत्यादिवचनेन शोकं कुर्वत इत्यर्थः आर्य्यपुत्रस्य उपरि इति अनेन प्रकारेण असदृशं खलु इत्यादि रामदुःखो-त्पादकवचनकथनेनेति भावः । निरनुक्रोशा निर्दया कठोरेति यावत् भविष्यामि । न मयैतद्वक्तव्यमिति भावः ।

(व) हृदयस्य मनसोऽनुबन्धः अवस्थाविशेषः ।

(१२) तटस्थमिति । तव हृदयं मनः नैराश्यात् पुनः समागमसम्भावना-

रामः। देवि!

प्रसाद इव मूर्त्तस्ते स्पर्शः स्नेहार्द्रशीतलः।
अद्याप्यानन्दयति मां त्वं पुनः क्वासि नन्दिनि! ॥ १४ ॥

सीता। एदे दे अगाधदंसिदसिणेहसंभारा आणन्दणिस्सन्दिणो सुदा मए अज्जउत्तस्स उल्लावा, जाणं पच्चएण णिक्कारणपरिच्चाअसल्लिदोवि बहुमदो मे जम्मलाहो (१८)।

रामः। अथवा कुतः प्रियतमा, नूनं * सङ्कल्पाभ्यासपाटवोपादान एष रामस्य भ्रमः।

---

(१८) एते ते अगाधदर्शितस्नेहसम्भारा आनन्दनिष्यन्दिनः श्रुता मया आर्य्यपुत्रस्य उल्लापाः, येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मे जन्मलाभः। अगाधमधिकं यथा तथा दर्शितः स्नेहसम्भारः प्रणयातिशय्यं येषु ते। आनन्दनिष्यन्दिनः परमानन्दजनकाः। उल्लापाः उच्चैर्विलापाः। अहेतुकं यः परित्यागो निर्वासनं तेन तज्जनितकलङ्केन इत्यर्थः, शल्यितः अकारणनिर्वासनजनितकलङ्कपङ्किल इत्यर्थः। बहुमतः श्लाघ्यः।

---

विरहात् तटस्थमुदासीनम् अपिच विप्रियवशात् निष्कारणनिर्वासनरूपाप्रियकार्य्यवशात् कलुषं कोपाकुलं दीर्घे दीर्घकालव्यापिनि अस्मिन् वियोगे विरहे झटिति अकस्मात् घटनया मिलनेन उत्तम्भितमिव लब्धप्रायं, सौजन्यात् स्नेहव्यञ्जकवाक्यादिना रामस्य निर्दोषत्वावगमादित्यर्थः प्रसन्नं प्रीतम्, अपितु अपिच करुणैः शोकव्यञ्जकैः रामस्य वाक्चेष्टितादिभिः गाढः घनीभूतः करुणः शोको यस्य यस्मिन् वा तत् तथोक्तम् अतएव अस्मिन् क्षणे अधुना प्रेम्णा दयितं प्रति प्रीत्या द्रवीभूतम् इव द्रवत्वमाप्तमिव अवशमित्यर्थः जातमिति शेषः। शिखरिणी वृत्तम्।

(१४) स्नेहेन स्नेहरसेन आर्द्रः सिक्तः अतएव शीतलः सन्तापहारक इत्यर्थः ते स्पर्शः मूर्त्तः मूर्त्तिमान् प्रसाद इव अनुग्रह इव मम नैष्ठुर्य्येऽपि अस्मस्ते प्रणय इति आदरातिशयात् प्रणयेऽपि प्रसादत्वोपचारः। अद्यापि निर्वासनादिनिर्दयव्यवहारानन्तरमपि हस्ते मद्गात्रस्पर्शात् पुनर्गृहीतेऽपि माम् आनन्दयति सुखयति। हे नन्दिनि आनन्ददायिनि! त्वं पुनः कुत्र असि भवसि।

* सङ्कल्पानाम् अभ्यासेन पौनःपुन्येन यत् पाटवं नैपुण्यं तदेव उपादानम् उत्पत्तिकारणं यस्य सः।

[ नेपथ्ये । ] प्रमादः प्रमादः । [ सीतादेव्या सकरुणकलितैरित्यर्द्धं पठ्यते । ]

रामः । [ सकरुणौत्सुक्यम् । ] किं तस्य ?

पुनर्नेपथ्ये । बध्वा सार्द्धमित्युत्तरार्द्धं पठ्यते ।

सीता । को दाणीं अहिउज्जिस्सदि (१९) ।

रामः । क्वासौ दुरात्मा यः प्रियायाः पुत्रकं वधूद्वितीयमभिभवति । [ इति उत्तिष्ठति । ]

[ प्रविश्य । सम्भ्रान्ता वासन्ती । ] कथं देवो रघुनन्दनः ।

सीता । कहं पिअसही मे वासन्ती (२०) ।

वास । जयति जयति देवः ।

रामः । [ निरूप्य । ] कथं देव्याः प्रियसखी वासन्ती ।

वास । देव ! त्वर्य्यतां त्वर्य्यताम्, इतो जटायुगिरिशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य्य सम्भावयतु (म) देव्याः पुत्रकं देवः ।

सीता । हा ताद जटाओ ! सुस्सं तुए विणा जणट्ठाणं (२१) ।

---

( १९ ) क इदानीमभियोक्ष्यते, कोऽधुना तस्य रक्षणार्थं मया नियोक्ष्यते इत्यर्थः । अहिउज्जिस्सदीत्यत्र णिउज्जिस्सदीति पाठः समीचीनः ।

( २० ) कथं प्रियसखी मे वासन्ती ।

( २१ ) हा तात जटायो ! शून्यं त्वया विना जनस्थानम् ।

---

( म ) सीतायास्तीर्थं जलावतारः घट्टप्रदेशः तेन, सीता येन घट्टेन प्रत्यहं गोदावरीमवतरति स्म तेन घट्टेन इत्यर्थः । तीर्थं योनौ जलावतारे चेति विश्वः । सम्भावयतु रक्षयतु ।

रामः। अहह! हृदयमर्मच्छिदः खलु अमी कथोद्घाताः (म)।

वास। इत इतो देवः।

सीता। भअवदि! सच्चं एव्व वणदेवदावि मं ण पेक्खदि? (२२)।

तम। अयि वत्से! सर्वदेवताभ्यः प्रकृष्टमैश्वर्यं भागीरथीदेव्याः, तत् किमाशङ्कसे।

सीता। तदो अणुसरह्म (२३)। [ इति परिक्रामतः। ]

रामः। [ परिक्रम्य। ] भगवति गोदावरि! नमस्ते।

वास। [ निरूप्य। ] देव देव! मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण।

रामः। विजयतामायुष्मान्।

सीता। अह्महे ईदिसो एसो संवुत्तो (२४)।

रामः। देवि! दिष्ट्या वर्द्धसे।

येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु! लवलीपल्लवः कर्णपूरात्।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यत् कल्याणं वयसि तरुणे भाजनं तस्य जातः॥ १५॥

---

(२२) भगवति! सत्यमेव वनदेवतापि मां न प्रेक्षते?

(२३) ततोऽनुसरामः।

(२४) अहो ईदृश एष संवृत्तः।

---

(म) कथोद्घाताः—कथानां पूर्ववृत्तान्तघटितानां वचनानां उद्घाता उच्चारणानि।

(१५) हे सुतनु! सुन्दरि! उद्गच्छदुत्तिष्ठत् नवोद्भिन्नमित्यर्थः यत् बिस-

सीता । अविउत्तो दाणीं अअं दीहाउ इमाए सोम्म-दंसणाए होदु (२५) ।

रामः । सखि वासन्ति ! पश्य पश्य कान्तानुवृत्ति-चातुर्य्यमपि अनुशिक्षितं वत्सेन ।

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत् स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥१६॥

---

( २५ ) अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु ।

---

किसलयं मृणालपल्लवं मृणालाग्रमित्यर्थः तदिव स्निग्धौ कोमलौ दन्ताङ्कुरौ अचिरोद्गतदन्तौ यस्य तेन तथोक्तेन । येन करिशावकेनेत्यर्थः । ते तव कर्णपूरात् कर्णाभरणात् लवलीपल्लवनिर्म्मितादित्यर्थः लवलीपल्लवः, लवली नोयाड़ इति इति भाषा । व्याकृष्टः आकृष्य गृहीतः । मदमुचां मदस्राविणां मत्तानामित्यर्थः वारणानां हस्तिनां विजेता सोऽयं तव पुत्रः पुत्रीकृतः स करिशावक इत्यर्थः तरुणे वयसि यौवने यत् कल्याणं मङ्गलम् अतिशयितबलशौर्य्यादिकं तस्य भाजनं पात्रं जातः । मन्दाक्रान्ता वृत्तम् ।

( १६ ) यत् यस्मात् हेतोः स्नेहात् अनुरागवशात् लीलया अक्लेशेन उत्खाता उत्पाटिता ये मृणालकाण्डाः मृणालस्तम्बाः, काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरयोरपीति मेदिनी । तेषां ये कवलच्छेदा ग्रासार्थखण्डास्तेषु पुष्यद्भि-र्विकसद्भिः पुष्करैः पद्मैः, बिसप्रसूनराजीवपुष्कराम्भोरुहाणि चेत्यादमरः । वासि-तस्य सुरभितस्य पयसः जलस्य गण्डूषाणां संक्रान्तयः सञ्चाराः सम्पादिताः कृताः । सम्पातिता इति पाठे गण्डूषधाराः सम्पातिताः विक्षिप्ताः । तथा, शीकरिणा जलकणवता जलस्राविणेति यावत्, करेण शुण्डेन, करो वर्षोपले रश्मौ पाणौ प्रत्ययशुण्डयोरिति मेदिनी । कामं पर्य्याप्तं यथा तथा सेकः सेचनं विहितः सम्पादितः । विरामे पुनः सेकानन्तरञ्चेत्यर्थः अनरालम् अवक्रं नालं मृणालं यस्य तादृशं यन्नलिनीपत्रं पद्मपत्रं तदेव आतपत्रं, आतपात्त्रायते इति आतप-वारणं छत्रमित्यर्थः धृतम् । वृत्तं शार्दूलविक्रीड़ितम् ।

सीता। भअवदि तमसे! अअं दाव ईदिसो जादो, दे उण ण आणामि कुसलवा एत्तिएण कालेन कीदिसा विअ होन्ति (२६)।

तम। यादृशोऽयं तादृशौ तावपि।

सीता। ईदिसी अहं मन्दभाइणी, जाए ण केअलं णिरन्तरं अज्जउत्तविरहो पुत्तविरहोवि (२७)।

तम। भवितव्यता इयमीदृशी।

सीता। किंवा मए पसूदाए, जेण तादिसं पि मम पुत्तकाणं ईसिविरलकोमलधवलदसणुज्जलकवोलं अणुबद्धमुद्धकाअलिविहसिदं णिबद्धकाअसिहण्डअं अमलमुहपुण्डरीअजुअलं ण परिचुम्बिदं अज्जत्तेण (२८) (य)।

तम। अस्तु देवताप्रसादात्।

---

(२६) भगवति तमसे! अयं तावदीदृशो जातः, तौ: पुनर्न जानामि कुशलवौ एतावता कालेन कीदृशौ इव भवतः।

(२७) ईदृशी अहं मन्दभागिनी, यस्या न केवलं निरन्तरमार्य्यपुत्रविरहः पुत्रविरहोऽपि।

(२८) किं वा मया प्रसूतया, येन तादृशमपि :मम पुत्रयोरीषद्विरलकोमलधवलदशनोज्ज्वलकपोलमनुबद्धमुग्धकाकलीविहसितं निबद्धकाकशिखण्डकममलमुखपुण्डरीकयुगलं न परिचुम्बितमार्य्यपुत्रेण।

---

(य) किंवा मया प्रसूतया, येन हेतुना तादृशमपि मम पुत्रयोः ईषद्विरलानि अनतिघनानि कोमलानि सुकुमाराणि धवलानि श्वेतानि दशनानि दन्ता यस्मिन् तथाच उज्ज्वलौ कान्तिपूर्णौ कपोलौ गण्डौ यस्मिन् तच्चेति तयोक्तम्, अनुबद्धे नियते मुग्धे मनोहरे काकलीविहसिते काकली मृदुमधुरास्फुटशब्दः विहसितं मधुरहास्यं च ते यस्मिन्, काकली तु कले सूक्ष्मे इत्याद्यमरः। मधुरस्वरं विहसितमिति च साहित्यदर्पणम्। निबद्धौ धृतौ काकशिखण्डकौ

सीता। भअवदि तमसे! एदिणा अपच्चसंसुमरणेण उस्ससिदपण्हुदत्थणी ताणं अ पिदुणो सण्णिधाणेण खणमेत्तं संसारिणी म्हि संवुत्ता (र) (२८)।

तम। किमत्र उच्यते? प्रसव: खलु प्रकर्षपर्यन्त: स्नेहस्य। परश्चैतदन्योऽन्यसंश्लेषणं पित्रो: (ल)।

अन्त:करणतत्त्वस्य दम्पत्यो: स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते॥ १७॥

---

(२८) भगवति तमसे! एतेन अपत्यसंस्मरणेन उच्छ्वसितप्रस्नुतस्तनी तयोश्च पितु: सन्निधानेन क्षणमात्रं संसारिणी अस्मि संवृत्ता।

---

व्याकपचौ येन तत्तथोक्तम्, अमलमुखपुण्डरीकयो: निर्मलमुखपद्मयोर्युगलम् आर्यपुत्रेण पत्या रामेण न चुम्बितम्। विफलं पुत्रयोर्जन्म मम च मन्दभागिन्या गर्भधारणमिति भाव:।

(र) अपत्यसंस्मरणेन पुत्रयो: स्मरणात् उच्छ्वसितौ दुग्धागमात् स्फीतौ प्रस्नुतौ क्षीरं स्रवन्तौ स्तनौ यस्या: सा तथोक्ता तथा तयो: पुत्रयो: पितुश्च इत्यर्थ: सन्निधानेन समीपावस्थानेन क्षणमात्रमहं संसारिणी पतिपुत्रवती संवृत्ता जाता। आपामरसाधारणोपभोग्यं गार्हस्थ्यफलं सत्स्वपि पतिपुत्रादिषु मया नोपभुक्तमिति भाव:।

(ल) प्रसव: अपत्यं खलु निश्चितं स्नेहस्य अनुरागस्य प्रकर्षपर्यन्त: प्रकर्षस्य आतिशय्यस्य पर्यन्तश्चरमसीमा। अपत्यजन्मनैव द्वन्द्वानामनुरागस्य परमोत्कर्षो भवति नात: परमस्य उत्कर्ष: सम्भाव्यते इति भाव:। परञ्च अपरञ्च एतत् एष प्रसव इत्यर्थ: विधेयप्राधान्यात् क्लीवत्वम्। पित्रो: माता च पिता च तौ पितरौ एकशेषद्वन्द्वसमास:। तयो: अन्योन्यसंश्लेषणम् अन्योन्यस्य परस्परस्य संश्लिष्यते अनेनेति संश्लेषणं बन्धनं सन्धिस्थानं संयोजनग्रन्थिरिति यावत्।

(१७) उपर्युक्तमेव विवृणोति अन्तरिति। जाया च पतिश्च तौ दम्पती जायाशब्दस्य दमादेशो निपातनात्। तयो: अन्त:करणतत्त्वस्य मन:सारस्य गूढनिहितस्य अन्त:करणसारभूतस्य पदार्थस्य इत्यर्थ: स्नेहसंश्रयात् उभयोरेव

वास। इतोऽपि देवः पश्यतु।

अतरुणमदताण्डवोत्सवान्ते
स्वयमचिरोद्गतमुग्धलोलबर्हः।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥ १८ ॥

सीता। [ सकौतुकास्रम्। ] एसो सो एसो सो (२०)।

रामः। वत्स! मोदस्व, वयमद्य वर्त्तामहे।

सीता। एव्वं भोदु (२१)।

रामः। भ्रमिषु कृतपुटान्तर्मण्डलावृत्ति चक्षुः
प्रचलितचतुरभ्रू ताण्डवैर्मण्डयन्त्या।
करकिसलयतालैर्मुग्धया नर्त्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥१९॥

---

(२०) एष सः एष सः। (२१) एवं भवतु।

---

प्रगाढस्नेहस्य एकास्पदत्वादित्यर्थः (अपत्यं न पतति भ्रश्यति अस्मादित्ययम्) एकः आनन्दग्रन्थिः उभयोः स्नेहसम्मिलनादानन्दमयोऽयं ग्रन्थिरित्यर्थः बध्यते प्रणयभ्रंशनिवारकग्रन्थिरयं स च हृन्मर्मसारेण स्नेहसूत्रेण बध्यते इति भावः। यथा केनचित् भ्रंशभयादात्मानं दृढ़ं क्वचिद् बध्यते गृहस्थैः स्नेहसूत्रेण अपत्ये आत्मानं बध्यते इति ध्वनिः।

(१८) अचिरोद्गतः संप्राप्तयौवनत्वात् नवोद्गतः मुग्धः मनोहरः लोलः चञ्चलः बर्हः कलापो यस्य स तथोक्तः, अतएव उद्गता शिखा चूड़ा यस्य स तथोक्तः, मणिमुकुटः मणिमयः शिरोवेष्टः इव प्रतीयमानः, वधूसखः वधूद्वितीयः सन्नित्यर्थः, स एष सीतया पुरा पोषित इत्यर्थः शिखण्डी मयूरः अतरुणेन अनल्पेन महतेति यावत् मदेन हर्षेण हेतुना यः ताण्डवोत्सवः नृत्योत्सवस्तस्यान्ते अवसाने कदम्बे कदम्बवृक्षे स्वयं स्वभावतः नदति शब्दायते। पुष्पिताग्रा वृत्तम्।

(१९) भ्रमिष्विति। भ्रमिषु चक्रगतिभ्रमणेषु कृता पुटयोर्नेत्रावरणयो-

हन्त तिर्य्यञ्चोऽपि परिचयमनुरुध्यन्ते। (व)

कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्द्धितो य आसीत्।

सीता। [निरूप्य सास्रम्।] सुट्ठु पच्चभिञ्आणिदं अज्ज-उत्तेण (३२)।

राम:। स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति ॥ २० ॥

वास। अत्र तावदासनपरिग्रहं करोतु देवः।

एतत्तदेव कदलीवनमध्यवर्त्ति
कान्तासखस्य शयनीयशिलातलं ते।

---

( ३२ ) सुष्ठु प्रत्यभिज्ञातमार्य्यपुत्त्रेण।

---

रन्तरभ्यन्तरे मण्डलावृत्तिः वर्त्तुलाकारभ्रमणं येन तथाभूतं यथा प्रचलितयोः चञ्चलयोः चतुरयोः सविलासयोश्च लीलाण्डवैर्नृत्यैः पुनः पुनः सञ्चारैरिति यावत् मण्डयन्त्या भूषयन्त्या मुग्धया तदानीं नवयौवनसम्पन्नया सीतया करकिसलयाभ्यां नवपल्लवाभ्यां सम्पादितैः तालैः कालक्रियापरिमाणैः करतलसंयोगशब्दसूचितैः कालपरिमाणैरिति यावत् नर्त्यमानं त्वां सुतमिव वत्सलेन स्नेहमयेन मनसा स्मरामि। मालिनी वृत्तम्।

(व) अनुरुध्यन्ते अनुसरन्ति स्मरन्ति इत्यर्थः।

(२०) कतिपयानां कियतां कुसुमानां पुष्पाणाम् उद्गमः उद्भवः यस्मिन् स तथोक्तः स्वल्पावयवत्वादिति भावः, यः कदम्बः प्रियतमया सीतया परिवर्द्धितः जलसेचनादिना परिपालितः आसीत्। देव्याः सीतायास्तं कदम्बतरुमिति शेषः एष गिरिमयूरः स्मरति। यतः यस्मात् अत्र कदम्बतरौ स्वजने इव स्वमातृतुल्यसीतापरिवर्द्धितत्वात् आत्मीयलोके इव प्रमोदम् आनन्दम् एति प्राप्नोति। पुष्पिताग्रा वृत्तम्।

अत्र स्थिता तृणमदाद् बहुशो यदेभ्यः
सीता, ततो हरिणकैर्न विमुच्यते स्म ॥२१॥

रामः। इदं तावदशक्यमेव द्रष्टुम्। [इति अन्यतो (श) दत्तनुपविशति।]

सीता। सहि वासन्दि! किं तुए किदं अज्जउत्तस्स मम अ एदं दंसअन्तीए। हद्दी! हद्दी! सो ज्जेव अज्जउत्तो, तं ज्जेव पञ्चवटीवणं, सा ज्जेव वासन्दी, ते ज्जेव विविहविस्सम्भ-साक्खिणो गोदावरीकाणणुद्देसा, ते ज्जेव जादणिव्विसेसा मिअपक्खिपादवा, सा ज्जेव चाहं, मम उण मन्दभाइणीए दीसन्तं पि सव्वं ज्जेव एदं णत्थि, ता ईदिसो जीअलोअस्स परिवत्तो (२२) * ।

---

(२२) सखि वासन्ति! किं त्वया कृतमार्य्यपुत्रस्य मम च एतद्दर्शयन्त्या। हा धिक्! हा धिक्! स एव आर्य्यपुत्रः, तदेव पञ्चवटीवनं, सैव वासन्ती, त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः, त एव जातनिर्विशेषा मृगपक्षिपादपाः, सैव चाहं, मम पुनर्मन्दभागिन्याः दृश्यमानमपि सर्वमेवैतत् नास्तीति तदीदृशो जीवलोकस्य परिवर्त्तः।

---

(२१) अथ वासन्ती रामस्य उपवेशनार्थमादिष्टं शिलातलं विवृणोति रामो-क्तितिर्य्यक्परिचयस्मरणं च द्रढयति एतदिति। कान्तासखस्य प्रियासहचरस्य ते तव एतत् तदेव पूर्वाभ्यस्तमेव कदलीवनमध्यवर्त्ति शयनीयशिलातलं शय्या-भूतः शिलाखण्डः। यत् यस्मात् अत्र शिलातले स्थिता सती सीता एभ्यः हरिणकेभ्य इत्यर्थः बहुशः बहुवारं तृणं भक्षणार्थमित्यर्थः अदात् दत्तवती ततः तस्मात् कारणात् हरिणकैः एतत् शिलातलमिति शेषः न विमुच्यते स्म अद्यापि न परित्यज्यते स्म। वसन्ततिलकं वृत्तम्।

(श) इदं शिलातलम्। अन्यतोऽन्यस्मिन् प्रदेशे।

* किं त्वया कृतं, शिलातलप्रदर्शनेन आवयोः शोकमुद्दीपयन्त्या त्वया मद्दर्शनिष्टमनुष्ठितमित्यर्थः। जातनिर्विशेषाः जातेभ्यः पुत्रेभ्यः नास्ति विशेषः

वास। सखि सीते! कथं न पश्यसि रामस्य अवस्थाम् (ष)।

कुवलयदलस्निग्धैरङ्गैर्ददौ नयनोत्सवं
सततमपि ते स्वेच्छादृश्यो नवं नवमेव यः।
विकलकरणः पाण्डुच्छायः शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशां प्रियः॥२२॥

सीता। पेक्खामि सहि! पेक्खामि (३४)।

तम। पुत्रि! पश्यन्ती प्रियं भूयाः (स)।

सीता। हा देव्व! एसो मए विणा, अहम्पि एदेण विणेत्ति सिविणेवि केण सम्भाविदं आसी। ता मुहुत्तकं पि

(३४) प्रेक्षे सखि! प्रेक्षे। प्रेक्षे पश्यामि।

प्रभेदो येषां ते तथोक्ताः पुत्रतुल्या आनन्दजनका इत्यर्थः। एतन्नास्ति सुखोत्पादकत्वेन न भवति सुखाय न भवतीत्यर्थः। ईदृशः एतादृशः जीवलोकस्य भुवनस्य परिवर्त्तः विपर्य्यासः स्वकीयदशाविपर्य्ययेण जगतामपि गुणविपर्य्यय इति भावः।

(ष) सीतां दृष्ट्वा नैषा वासन्त्युक्तिः किन्तु तामुद्दिश्यैव, भागीरथीवरात् रामवद् वासन्त्या अपि सीतादर्शनासामर्थ्यात्।

(२२) कुवलयेति। सततमनिर्बाधं ते तव स्वेच्छया इच्छामात्रेण दृश्योऽपि यथावस्थं दृश्यमानोऽपीत्यर्थः यो रामः कुवलयदलस्निग्धैः नीलोत्पलदलकोमलैः अवयवैरङ्गैः नवं नवमेव अननुभूतपूर्वमेव, नयनयोः, उत्सवं आनन्दं ददौ। एवम्भूतमधुरमूर्त्तिः य आसीदित्यर्थः। शुचा त्वद्विरहशोकेन विकलकरणः विवशेन्द्रियः पाण्डुच्छायः मलिनकान्तिः परिदुर्बलः अत्यन्तं कृशः स तादृशो मधुरमूर्त्तिः इत्यर्थः अयं पुरोवर्त्ती स रामः स इति स एवायमिति कथमपि कथञ्चित् उन्नेतव्यः अभिज्ञातव्यः तथापि दृशां चक्षुषां प्रियः प्रीतिकरः। हरिणी वृत्तम्।

(स) प्रियं रामं पश्यन्ती प्रेक्षमाणा भूयाः भव। निरन्तरं प्रियं प्रेक्षस्व। पुनस्तव प्रियेण समागमो भवतु इति भावः।

जम्मन्तरादो विअ अणुलद्धदंसणा वाहसलिलन्तरेसु (ह) पेक्खामि दाव वच्छलं अज्जउत्तं (३५)। [ इति पश्यति । ]

तम । सस्नेहास्रं परिष्वज्य ।

विलुलितमतिपूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा ।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥२३॥

वास ।

ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्चुतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।

---

(३५) हा दैव ! एष मया विना, अहमप्येतेन विनेति स्वप्नेऽपि केन सम्भावितमासीत् । तन्मुहूर्तकमपि जन्मान्तर इव अनुलब्धदर्शना बाष्पसलिलान्तरेषु पश्यामि तावद्वत्सलमार्य्यपुत्रम् ।

---

(ह) जन्मान्तरत अन्यस्मिन् जन्मनि इव. सप्तम्यां तसिल् । बाष्पसलिलानां अश्रुजलानां पतनोद्गमनयोरन्तरेषु अवकाशेषु ।

(२३) विलुलितेति । आनन्दशोकप्रभवं मिलनानन्दात् विरहशोकाच्च प्रभवः उत्पत्तिर्यस्य तं तथोक्तम् अतिपूरैः प्रवाहवेगैः विलुलितं विगलितं बाष्पमश्रुजलम् अवसृजन्ती मुञ्चती, तृष्णया प्रबलदर्शनेच्छया हेतुना उत्ताना विस्फारिता च दीर्घा च निश्चलत्वाद्दीर्घेव प्रतीयमाना स्नेहनिष्यन्दिनी स्नेहसूचिका अञ्जनराहित्यात् प्रसादातिशयाच्च धवलबहला अतिशयशुभ्रा अतएव मुग्धा मनोहारिणी च अतएव दुग्धकुल्येव दुग्धस्रुद इव, कुल्याल्पा कृत्रिमा सरित् इत्यमरः । प्रतीयमाना ते तव दृष्टिः हृदयेशं जीवितेश्वरं स्नपयति अभिषिञ्चति । यथा काचित् कञ्चित् स्नपनार्थं स्नेहद्रव्येण समभिलिप्य जलं वर्षति तद्वत्तव दृष्टिः रामं स्नेहेन संयोज्य अश्रुजलं वर्षतीति ध्वनिः । मालिनीवृत्तम् ।

(२४) मधु श्च्योतन्तीति मधुश्चुतः मधुस्राविणः तरवो वृक्षाः पुष्पैः फलैश्च करणैरर्घ्यं पूजासाधनं मधुयुतानि पुष्पाणि फलानि चेत्यर्थः ददतु रामायेति शेषः । स्फुटितानां विकसितानां कमलानां पद्मानाम् आमोदस्य सौरभस्य प्रायो

कलमविरलं रत्युत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २४ ॥

रामः । एहि सखि वासन्ति ! नन्वितः स्थीयताम् ।

वास । [ उपविश्य सास्रम् । ] महाराज ! अपि कुशलं कुमारलक्ष्मणस्य ?

रामः । अश्रुतिमभिनीय ।

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान् मैथिली यानपुष्यत् ।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥ २५ ॥

वास । महाराज ! ननु पृच्छामि, अपि कुशलं कुमारलक्ष्मणस्य ?

---

बाहुल्यं येषु ते तथोक्ताः वनानिलाः अरण्यवाताः अथवा सलिलवाताः, एतेन शैत्यमप्युक्तं, प्रवान्तु प्रकृष्टं सुखकरमित्यर्थः वहन्तु । रत्या प्रियागमनसमुद्भूतेन अनुरागभरेण उत्कण्ठा ऊर्ध्वाः कण्ठा येषां ते तथोक्ता उन्नमितग्रीवा इत्यर्थः शकुन्तयः पक्षिणः अविरलम् अजस्रं कलं मधुरं यथा तथा क्वणन्तु गायन्तु । कुत इत्याह । देवो भगवान् रामः स्वयं पुनः भूयः इदं वनमागतः । राज्ञो रामस्य सम्माननार्थं तरवः अर्घ्यभाजनधारिणः सरोवरवाताः व्यजनकारिणः पक्षिणश्च वैतालिका भवन्त्विति भावः । वनाधिदेवतात्वात् वासन्त्या कथितमेतद् युक्तमेव । हरिणी वृत्तम् ।

( २५ ) मिथिलस्य मिथिलाधिपतेर्जनकस्य अपत्यं स्त्री मैथिली जानकी करः कमलमिव तेन वितीर्णैर्दत्तैः अम्बुनीवारशष्पैः जलनीवारधान्यनवोद्गत-तृणैः करणैः यान् तरुशकुनिकुरङ्गान् वृक्षपक्षिहरिणान् अपुष्यत् पोषयामास । तेषु तरुशकुनिकुरङ्गेषु सत्सु, प्रस्तरस्य पाषाणस्य उद्भेदे उद्भिद्य द्रवीकरणे योग्यः समर्थः द्रव इव कोऽपि अनिर्वचनीय इत्यर्थः मम हृदयस्य चित्तस्य विकारः शोकादिजन्यविकृतिर्भवति । अनेन विकारेण पाषाणा अपि द्रवीभवन्ति किं पुनर्मांसास्थिसञ्चयोऽयं देह इति भावः । मालिनीवृत्तम् ।

रामः। [स्वगतम्।] अये महाराजेति निष्प्रणयमामन्त्रणपदं, सौमित्रिमात्रे च वाष्पस्खलिताक्षरः कुशलप्रश्नः, तथा मन्ये विदितसीतावृत्तान्तेयमिति (ख)। [प्रकाशम्।] अपि कुशलं कुमारस्य। [इति रोदिति।]

वास। अयि देव! किमिति दारुणो दारुणः खलु असि (क)।

सीता। सहि वासन्दि! किं तुमं सि एव्वं वादिणी, पिअरहो क्खु सव्वस्स अज्जउत्तो, विसेसदो मम पिअसहीए (२६)।

वास। त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।

---

(२६) सखि वासन्ति! किं त्वमस्य एवंवादिनी, प्रियार्हः खलु सर्वस्य आर्यपुत्रः, विशेषतो मम प्रियसख्याः। प्रियार्हः—प्रियवचनार्हः।

---

(ख) निष्प्रणयं प्रणयाभावसूचकम् आमन्त्रणपदं सम्बोधनपदम्। सौमित्रिमात्रे केवले लक्ष्मणे च, लक्ष्मणमात्रविषयः न तु सीताविषय इत्यर्थः कुशलप्रश्नः मङ्गलजिज्ञासा। स च वाष्पस्खलिताक्षरः वाष्पेण वाष्पभरावरुद्धकण्ठतया स्खलितानि अस्पष्टोच्चारितानि अक्षराणि यस्मिन् स तथोक्तः। तथा तेन हेतुना मन्ये विदितं ज्ञातः सीतावृत्तान्तः सीतानिर्वासनव्यापारः यया सा तथोक्ता इयम्। इयं सीतानिर्वासनवृत्तान्तं ज्ञातवतीत्यर्थः अन्यथा सीताया अपि कुशलं पृच्छेदिति भावः।

(क) दारुणो दारुणः अतिदारुणः अतिकठोरः। अन्यथा को जनः निष्कारणं निरपराधां सहधर्मिणीं निर्वासयतीति भावः।

(२६) त्वं मे मम जीवितं जीवितवत् प्रियतमेत्यर्थः, त्वां विना नाहं जीवामीति भावः। त्वं मे द्वितीयं हृदयम् असि भवसि सर्वविषयेष्वेव परस्परमेकात्मतया अपरम् अन्तःकरणमिव त्वदज्ञातं मे किमपि रहस्यं नास्तीति भावः। त्वं मे नयनयोः कौमुदी ज्योत्स्ना कौमुदीव स्निग्धकारी प्रीतिजनिकेति यावत् न मे चक्षुषस्त्वया विना तृप्तिरिति भावः। त्वं मे अङ्गे अमृतं

इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव, शान्तमथवा किमिहोत्तरेण ॥ २६ ॥

इति मूर्च्छति।

रामः। स्थाने खलु वाक्यनिवृत्तिर्मोहश्च (ख)। सखि! समाश्वसिहि समाश्वसिहि।

वास। [समाश्वस्य।] तत् किमिदमकार्य्यमनुष्ठितं देवेन।

सीता। सहि वासन्दि! विरम विरम (२७)।

रामः। लोको न मृष्यतीति (ग)।

वास। तत् कस्य हेतोः।

रामः। स एव जानाति किमपि (घ)।

---

(२७) सखि वासन्ति! विरम विरम। ईदृशकठोरवाक्यकथनात् विरता भवेत्यर्थः।

---

सुधावदनिर्वचनीयसुखोत्पादिनी त्वदधिका सुखकारणं मे किमपि नास्ति, इत्यादिभिः प्रियशतैः श्राव्यमधुरशब्दैः मुग्धां सरलहृदयाम् अनुरुध्य प्रीणयित्वा तामेव निरतिशयविश्वस्तहृदयां त्वदेकमात्रजीवितामित्यर्थः निर्वासितवानिति वाक्यशेषः वासन्त्या निःश्वासवाष्पावरोधशोकसम्भारद्योतनार्थं कविना न कृतः तदुच्चारणाशक्तेर्वासन्त्याः तत्रैव विश्राम इत्याशयः। अथ सा आत्मानं संयम्य स्त्रीयाचमत्वं निवारयन्ती आह शान्तमिति। अथवा शान्तम् असहनत्वान्न कथनार्हम् इह अस्मिन् सीताविषये उत्तरेण वाक्येन, सीतायास्तादृशदशाविपर्य्यासात् परेण वाग्विन्यासेन किं, किं प्रयोजनम्, अधुना तत् सर्व्वथैव निष्प्रयोजनमिति भावः। वसन्ततिलकं वृत्तम्।

(ख) वाक्यनिवृत्तिः वासन्त्या वाग्रोधः मोहश्च स्थाने खलु युज्यते एव, अतिशयितशोकोद्दीपकत्वादस्याः निर्वासनजन्यवासन्तीहृद्गतभावस्येत्यर्थः।

(ग) न मृष्यति न सहते सीताया गृहावस्थानं न तेषां वाञ्छितमित्यर्थः।

(घ) स एव जानाति, नान्यो जानातीत्यर्थः, तादृशज्ञानस्य प्रकृतकारणा-

तम । उचितस्तदुपालम्भः (ङ) ।

वास । अयि कठोर ! यशः किल ते प्रियं
किमयशो ननु घोरमतः परम् ।
किमभवद्विपिने हरिणीदृशः
कथय नाथ ! कथं वत मन्यसे ॥ २७ ॥

सीता । तुमं ज्जेव सहि वासन्दि ! दारुणा कठोरा अ, जा एव्वं विलवन्ती पदीवेसि (३८) ।

तम । प्रणय एवेदं व्याहरति शोकश्च (च) ।

रामः । सखि ! किमत्र मन्तव्यम् ।

---

(३८) त्वमेव सखि वासन्ति ! दारुणा कठोरा च, या एवं विलपन्ती प्रदीपयसि । त्वं विलापेन आर्य्यपुत्रस्य मद्वियोगदुःखं पुनरुद्दीपितं करोषीत्यर्थः । जा एव्वं अज्जउत्तं पदित्तं पदीवेसि इति पाठे या एवमार्य्यपुत्रं प्रदीप्तं प्रदीपयसि ।

---

भावान्न मया न वान्येन बुद्धिमता ज्ञातव्यमिति भावः सर्वथा अज्ञा निष्करुणाश्च लोकाः लोकानुरञ्जनञ्च मे कर्त्तव्यं तत् किं मया क्रियतां सीतापरित्यागादन्यत् इति फलितार्थः ।

(ङ) तस्य लोकस्य उपालम्भस्तिरस्कारः उचितः न्याय्यः आसीदिति शेषः ।

(२७) अयि कठोर ! हे कठिनहृदय ! किल निश्चितं ते तव यशः कीर्त्तिः प्रियं यश एव तव श्रेष्ठं नान्यत् किञ्चनेति भावः । ननु भोः अतःपरं किं घोरं दारुणम् अयशः अकीर्त्तिरस्ति यत् हे नाथ ! हे प्रभो ! हरिणीदृशः मृगलोचनायास्तस्याः सीताया विपिने वने किम् अभवत् कथय । वत खेदसूचकमव्ययं, कथं किंप्रकारं मन्यसे, वारमेकं चिन्तय किमभवत्तस्या इत्यर्थः शोकबाहुल्याद्द्विरुक्तिः । द्रुतविलम्बितं वृत्तम् ।

(च) प्रणयः रामं प्रति अनुरागः शोकस्त्वन्निर्वासनजनितो दुःखातिशयश्च इदं पूर्वोक्तप्रकारम्, अयि कठोरेत्यादि वासन्तीकथितमुपालम्भवचनं व्याहरति कथयति, शोको मोहश्च तामेवं वादिनीं करोति अतो नास्याः दोषः इत्यर्थः ।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः।
ज्योत्स्नामयी च मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता॥ २८॥

सीता। अज्जउत्त! धरामि एसा धरामि (३९)।

रामः। हा प्रिये जानकि! क्वासि।

सीता। हद्धी! हद्धी! अज्जउत्तोवि पमुक्तकण्ठं रोइदि (४०)।

---

(३९) आर्य्यपुत्र! ध्रिये एषा ध्रिये। एषा अहमिति शेषः। ध्रिये जीवामीत्यर्थः। रामस्य दुःखातिशयमसहमानायाः विस्मृतात्मनः सीताया इठोक्तिरियम्।

(४०) हा धिक्! हा धिक्! आर्य्यपुत्रोऽपि प्रमुक्तकण्ठं रोदिति। प्रमुक्तः कण्ठो यस्मिन् प्रमुक्तकण्ठम् उच्चैःस्वरमित्यर्थः।

---

(२८) त्रस्तस्य भीतस्य एकहायनस्य एकवर्षवयस्कस्य कुरङ्गस्य हरिणस्येव विलोला चपला दृष्टिर्यस्याः यस्यास्तथोक्तायाः, हायनो न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोरिति मेदिनी। भयात् अतिशयचञ्चललोचनाया इत्यर्थः कुरङ्गदृष्टिः स्वभावत एव चञ्चला त्रस्तस्य एकहायनस्येति च विशेषणद्वयं चाञ्चल्यातिशयद्योतनार्थं भीतत्वात् शिशुत्वादधिकचञ्चला हि हरिणदृष्टिर्भवति। परिस्फुरितस्य भयादतिकम्पितस्य गर्भस्य भरेण भारेण अलसायाः मन्थरायाः आत्मत्राणासमर्थाया इति यावत् तस्याः सीतायाः ज्योत्स्नामयी च चन्द्रिकामयी च चन्द्रिकावत् स्निग्धलावण्यमयी चेत्यर्थः। ज्योत्स्नामयी वेति पाठे ज्योत्स्नात्मिकेव ज्योत्स्नावत् स्निग्धलावण्यमयी कार्कश्यादिदोषरहिता च। मृदुबालमृणालकल्पा कोमलमृणालाङ्कुरनिभा अतिपेलवा स्पर्शभङ्गुरा इत्यर्थः अङ्गलतिका देहलता नियतं निश्चितं क्रव्यं मांसम् अदन्तीति तैस्तथोक्तैर्मांसलोलुपैः श्वापदैर्विलुप्ता भक्षितेत्यर्थः। वसन्ततिलकं वृत्तम्।

तम। वत्से ! साम्प्रतिकमेवैतत्, कर्त्तव्यानि दुःखितै-र्दुःखनिर्वापणानि (क)। यतः

पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया।
शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते ॥ २९ ॥

विशेषतो रामभद्रस्य बहुतरप्रकारकष्टो जीवलोकः।

इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्मः क्लमयति।
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥३०॥

---

(क) वत्से साम्प्रतिकमेवैतत् उचितमेवैतत्। दुःखितैः शोकार्त्तैः जनैरिति शेषः दुःखनिर्वापणानि शोकोपशमनानि विलापरोदनादीनीत्यर्थः कर्त्तव्यानि।

(२९) तडागस्य जलाशयस्य पूरोत्पीडे जलवृद्धिजन्ये निर्गमोद्यते सति परीवाहः प्रवृद्धजलांशनिःसारणं प्रतिक्रिया प्रतीकारः। अन्यथा अन्तःचय-सेतुभङ्गसमीपस्थभूमज्जनादिदोषोत्पत्तेरिति भावः। च तथा शोकक्षोभे प्रबल-दुःखावेगे सति हृदयं चित्तं प्रलापैः प्रमुक्तकण्ठरुदितैः धार्य्यते पुनर्व्यवस्थाप्यते। यथा जलवृद्धौ जलनिःसारणं तडागादिरक्षणोपायः तथा शोकवृद्धौ तद्बहिष्कार-रूपप्रलापरोदनमेव आत्मत्राणोपाय इति भावः।

(३०) बहुतरप्रकारकष्टत्वमेव सूचयति इदमिति। अभियुक्तेन निरन्तर-मवहितेन मनसा इदं विश्वं जगत् विधिवत् यथाविधानं पाल्यं रक्षणीयम् अन्यथा अधर्मापत्तेरिति भावः। तच्च राज्यपालनमतीवकष्टकरमित्यभिप्रायः। घर्मः आतपः कुसुममिव कुसुमं यथा तथा प्रियाशोकः सीताविच्छेदसन्तापः जीवं जीवनं क्लमयति ग्लपयति। एतदपि कष्टात् कष्टतरमिति भावः। स्वयं त्यागं प्रियापरिवर्जनं कृत्वा विलपनविनोदोऽपि पश्चात् रोदनादिना शोकापनोदन-चेष्टापि असुलभः न सुलभावकाशः विद्याचारविरोधितया न सङ्गत इत्यर्थः। शोकापनोदनचेष्टापि न शक्या इत्येतदपि महत् कष्टकरम्। पूर्वोक्तप्रकारेण कदाचिदपि रामस्य न दुःखावेगप्रकाशावसर इति महांस्तस्य क्लेशः। तत् तस्मात् अद्य अधुना भवत्समीपे। अपि सम्भावनायाम्। उच्छ्वासः शोका-

रामः। कष्टं भोः कष्टम्।

दलति हृदयं गाढोद्वेगो द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्॥३१॥

सीता। एवमेदम् (४१)।

रामः। हे भवन्तः पौरजानपदाः!

न किल भवतां स्थानं देव्या गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न वाप्यनुशोचिता।

---

(४१) एवमिदम्।

---

वेगस्य प्रकाशः यद्रुदितं भवति ननु तत्लाभो हि लाभ एव। यतः, शोक-क्षोभे च हृदयं प्रलापैरेव धार्य्यते इति भावः। शिखरिणी वृत्तम्।

(३१) दलतीति। गाढोद्वेगः प्रगाढ़शोकसम्भारः हृदयम् अन्तःकरणं दलति पिनष्टि। न तु तत् हृदयं द्विधा द्विखण्डीभूय भिद्यते विदीर्य्यति। भिद्यते इति कर्मकर्तृवाच्यप्रयोगः। विदीर्णे सति हृदयापायात् क्लेशोऽपि न स्यादिति भावः। विकलः विवशः कायः देहः मोहं दुःसहशोकसम्भारात् अचेतनभावं वहति धारयति, चेतनां च न मुञ्चति न परित्यजति। क्षणे क्षणे चैतन्यञ्च भवतीत्यर्थः। चिरमोहरूपमृत्यौ सति सर्व एव शोको निर्वापितः स्यादिति भावः। अन्तर्दाहः मनस्तापः तनुं शरीरं ज्वलयति, न च तां भस्मसात् भस्माव-शेषां करोति। तथा सति न मे दुःखं स्यादिति भावः। विधिर्विधाता मर्माणि छिनत्तीति मर्मच्छेदी मर्मस्थानच्छेदनशीलः प्रहरति मामिति शेषः, बलात् मम मर्माणि छिनत्तीत्यर्थः, जीवितं प्राणान् न कृन्तति न छिनत्ति न हन्तीत्यर्थः। तेन मे सकलदुःखावसानं स्यादिति तदन्यथाभूतेन सर्वेणैव भावेन दारुणो मे दैवदुर्विपाक इति भावः। हरिणी वृत्तम्।

(३२) किलेत्यतीतघटनायां, देव्याः सीताया गृहे स्थानमवस्थानं भवतां

चिरपरिचितास्ते ते भावाः परिद्रवयन्ति मां
इदमशरणैरद्याप्येवं प्रसीदत रुद्यते ॥ ३२ ॥

तम। अतिगम्भीरमापूरणं शोकसागरस्य (ज)।

वास। देव! अतिक्रान्ते धैर्य्यमवलम्ब्यताम् (झ)।

रामः। सखि! किमुच्यते धैर्य्यमिति।

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः।
प्रनष्टमिव नामापि न च रामो न जीवति ॥ ३३ ॥

---

न अभिमतम् आसीदिति किलार्थः। ततस्तस्मात् कारणात् सा इति शेषः तृणमिव अनादृतघासादिवत् शून्ये वने त्यक्ता मयेति शेषः, न वापि सा अनुशोचिता। भवतामनुरञ्जनार्थमेव मया एतानि दुष्कराणि कृतानि इत्यर्थः। चिरपरिचिताः सीतया सह पुरा चिरमनुभूतास्ते ते भावाः पदार्थाः मद्दीरुहवर्हिशिलातलादयः मां परिद्रवयन्ति सर्वथा व्याकुलीकुर्वन्ति, इदम् अस्मात्, कारणात् इदमित्यव्ययम्। अशरणैरनवलम्बैः अस्माभिरिति शेषः एवम् इत्थं रुद्यते विलप्यते। अद्यापि अधुनापि बहुकाले गतेऽपीत्यर्थः प्रसीदत यूयमिति शेषः। अधुना भवत्प्रसादः अकिञ्चित्करोऽपि मम सान्त्वनार्थं भविष्यतीति भावः। भवतामनुरञ्जनार्थमेव मया पूर्वोक्तानि दुष्कराणि कृतानि भवद्भिस्तु मदर्थं न किमपि कृतमिति पौरजानपदानुद्दिश्य शोकः। हरिणी वृत्तम्।

(ज) आपूरणं पूर्णता। अवगूरणमिति पाठे अवगूरणम् आवर्त्तः।

(झ) अतिक्रान्ते अतीतविषये सीतावियोगरूपे धैर्य्यम् अवलम्ब्यतां गतस्य शोचना निष्फला तत्र धैर्य्यावलम्बनमेव श्रेय इति भावः।

(३३) किमुच्यते धैर्य्यमिति। मत्प्रदर्शितात् परमपि धैर्य्यमस्ति इति साक्षेपोक्तिः। धैर्य्यस्य विषयः कः कथ्यते भवता मया हि धैर्य्यस्य परा काष्ठा प्रदर्शितेति भावः। तदेव दर्शयति देव्या इति। देव्या सीतया शून्यस्य जगतो लोकस्य द्वादशः परिवत्सरः संवत्सरः प्रवर्त्तते इति शेषः, तस्या इत्युक्तं सीतायाः नामापि प्रनष्टमिव विलुप्तमिव सुदीर्घकालात्ययवशादधुना तस्याः नामापि केनचिन्नोच्चार्य्यते इत्यर्थः, च अथच रामो न जीवति इति न। रामरूपेण पाषाणमयोऽहमद्यापि वर्त्तमानोऽस्मि अतः प्रियतमाविरहेऽपि यन्मम जीवनधारणं तद्धि परा काष्ठा धैर्य्यस्येति भावः।

सीता। मोहिदह्मि अज्जउत्तस्स एदेहिं वअणेहिं (४२)।

तमसा। एवं वत्से! (ञ)।

नैताः प्रियतमा वाचः स्नेहार्द्राः, शोकदारुणाः।
एतास्ता मधुनो धारारश्च्योतन्ति सविषास्त्वयि ॥३४॥

रामः। अयि वासन्ति! मया खलु

यथा तिरश्चीनमलातशल्यं
प्रत्युप्तमन्तः सविषश्च दंशः।
तथैव तीव्रो हृदि शोकशङ्कु-
र्मर्माणि कृन्तन्नपि किं न सोढः? ॥३५॥

सीता। एवं ह्मि मन्दभाइणी पुणोवि आआसआरिणी अज्जउत्तस्स (४३)।

रामः। एवमतिनिष्कम्पस्तम्भितान्तःकरणस्यापि मे संस्तुतबहुतरप्रियदर्शनादुद्दामोऽयमावेगः (ट)। तथाहि

(४२) मोहितास्मि आर्य्यपुत्रस्य एतैर्वचनैः।

(४३) एवमस्मि मन्दभागिनी पुनरप्यायासकारिणी आर्य्यपुत्रस्य। आयासकारिणी दुःखहेतुः।

(ञ) एवं यदुच्यते तत् तथैवेत्यर्थः।

(३४) स्नेहार्द्राः स्नेहबहुला एता वाचः शोकदारुणाः प्रियतमा अपि शोकसूचकत्वाद् दुःसहा अतो मां विषयीकृत्य विह्वलयन्तीत्यर्थः, न प्रियतमाः नाभीष्टाः। एतास्ता मधुनो धाराः इवेति गम्यते त्वयि सविषा विषमिश्राः श्च्योतन्ति गलन्ति।

(३५) अन्तः हृदये प्रत्युप्तं विद्धं तिरश्चीनं तिर्य्यग्भावापन्नम् अलातशल्यं ज्वलदङ्गारमयशल्यं यथा, सविषो विषात्मको दंशश्च दन्तप्रवेशश्च यथा तथैव तद्वदेव तीव्रस्तीक्ष्णः नितरां दुःसह इत्यर्थः हृदि निहित इति शेषः शोकशङ्कुः शोककीलः मर्माणि कृन्तन् छिन्दन्नपि किं न सोढ़ः मयेति शेषः। तत् किमपरं करिष्यामि धैर्य्यावलम्बने तद्वदेति भावः। उपजाति वृत्तम्।

(ट) अतिनिष्कम्पम् अतिनिश्चलं यथा तथा स्तम्भितं स्थिरीकृतम् अन्तः-

लोलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
यो यो यत्नः कथमपि मया धीयते तं तमन्तः।
भित्त्वा भित्त्वा प्रसरति बलात् कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः॥ ३६॥

सीता। एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुक्ख-संक्खोहेण पफ्फुरिदणिअदुःखं विअ आकम्पिदं मे हिअअं (४४)।

वास। [स्वगतम्।] कष्टमभ्यापन्नो देवस्तदन्यतः क्षिपामि (ठ) तावत्। [प्रकाशम्] चिरपरिचितानामितेषां जनस्थानभागानामवलोकनेन आत्मानमानन्दयतु देवः।

---

(४४) एतेन आर्य्यपुत्रस्य दुर्वारदारुणारम्भेण दुःखसंक्षोभेण प्रस्फुरित-निजदुःखमिवाकम्पितं मे हृदयम्।

---

कारणं येन तस्य तथोक्तस्य यत्नेन धैर्य्यमालम्ब्य स्थितस्येत्यर्थः को मम अयम् आवेगः शोकप्रवाहः संस्तुतानां पूर्वपरिचितानां बहुतराणां प्रियाणां जनानां वस्तूनाञ्च दर्शनादुद्दामः अतिभूमिं गतः। परिचितवस्तुदर्शनात् तु सहसोद्भूतोऽयं वेगः कष्टेनापि न निवर्त्तनीय इति भावः।

(३६) लोलादपि उल्लोलम् अतिचञ्चलं यथा तथा क्षुभितस्य उद्वेलकरुणस्य शोकस्य यज्जृम्भणं आविष्कारः तस्य स्तम्भनार्थं प्रतिरोधार्थं मया यो यो यत्नः कथमपि क्लेशेन आधीयते क्रियते, कोऽपि अननुभूतपूर्वः अनिर्वचनीयश्चेतो-विकारः चित्तवैक्लव्यं तोयस्य जलस्य अप्रतिहतरयः अनिरुद्धवेगः ओघः प्रवाहः सैकतं सिकतामयं वालुकानिर्मितमिति यावत् सेतुम् आलिमिव तं तं यत्नमित्यर्थः भित्त्वा भित्त्वा पुनः पुनः भङ्क्त्वा शोधीकृत्येत्यर्थः बलात् वेगेन अन्तः मनसि प्रसरति प्रविशति। अतो यत्नेनापि न निवारयितुं शक्योऽयं शोकावेगः तत् किं पुनरुपदिश्यते भवत्या। मन्दाक्रान्तावृत्तम्।

(ठ) कष्टमिति दुःखसूचकमव्ययम्। अभ्यापन्नः निरतिशयशोकाकुलः, आक्षिपामि विषयान्तरे आकर्षामि विषयान्तरासक्तचित्तं करोमीत्यर्थः।

रामः। एवमस्तु। [ इति उत्थाय परिक्रामति। ]

सीता। सन्दीवनाश्रो ज्जेव दुक्खस्स पिअसहीविणोदणोवात्रा त्ति मखेदि (४५)।

वास। देव देव!

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीरोधसि।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः॥३७॥

सीता। दारुणासि सहि वासन्दि! दारुणासि, जा एदेहिं हिअअमम्मगूढसल्लसरिसेहिं पुणो पुणो मं मन्दभाइणीं अज्जउत्तं वि दूणावेसि (४६)।

रामः। चण्डि जानकि! इतस्ततो दृश्यसे इव न चानुकम्पसे (ङ)।

---

(४५) सन्दीपना एव दुःखस्य प्रियसखीविनोदनोपाया इति मन्यते।

(४६) दारुणासि सखि वासन्ति! दारुणासि, या एतैर्हृदयमर्मगूढशल्यसदृशैः पुनः पुनर्मां मन्दभागिनीमार्य्यपुत्रमपि दुनोषि।

---

(३७) अस्मिन्नेव पुरोवर्त्तिनि इत्यर्थः लतागृहे निकुञ्जे त्वं तस्याः सीतायाः मार्गे प्रत्यागमनवर्त्मनि दत्ते ईक्षणे येन स तथोक्तः अभवः आसीः गोदावरीं गतायाः सीतायाः प्रत्यागमनविलम्बात् तदागमनपथि सतृष्णदृष्टिक्षेपं प्रतीक्षमाण आसीरित्यर्थः। सा पुनः सीता हंसैः कृतमाहितं कौतुकं दर्शनाभिलाषः यस्याः सा तथोक्ता सती गोदावर्य्या रोधसि तीरे चिरमभूत् चिरं तस्थौ। आयान्त्या गोदावरीतटात् प्रत्यावर्त्तयेत्यर्थः तया सीतया त्वां परिदुर्मनायितमिव कालविलम्बान्नितरामुत्कण्ठितहृदयमिव वीक्ष्य दृष्ट्वा कातर्य्यात् त्वत्कोपसम्भावनाजनितव्याकुलतया अरविन्दकुड्मलनिभः कमलकोरकसन्निभः मुग्धः मनोहरः प्रणामार्थः अञ्जलिः त्वत्प्रसादायेत्यर्थः बद्धः रचितः आसीदिति शेषः। शार्दूलविक्रीड़ितं वृत्तम्।

(ङ) मां प्रति क्रुद्धासीति चण्डीति सम्बोधनम्।

हा हा देवि ! स्फुटति हृदयं स्रंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा,
विष्वङ्मोहः स्थगयति, कथं मन्दभाग्यः करोमि ॥३८॥

इति मूर्च्छति ।

सीता । हद्धी हद्धी पुणोवि पमूढो अज्जउत्तो (४७) ।

वास । देव ! समाश्वसिहि समाश्वसिहि ।

सीता । हा अज्जउत्त ! मं मन्दभाइणीं उद्दिसिअ सअलजीअलोअमङ्गलाधारस्स दे जम्मलाहस्स वारं वारं संसइदजीविददारुणो दसापरिणामोत्ति हा हदम्हि (४८) ।

इति मूर्च्छति ।

तम । वत्से ! समाश्वसिहि समाश्वसिहि, पुनस्त्वत्पाणिस्पर्श एव सञ्जीवनोपायो रामभद्रस्य ।

---

( ४७ ) हा धिक् ! हा धिक् ! पुनरपि प्रमूढ आर्य्यपुत्रः ।

( ४८ ) हा आर्य्यपुत्र ! मा मन्दभागिनीमुद्दिश्य सकलजीवलोकमङ्गलाधारस्य ते जन्मलाभस्य वारं वारं संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि । दशापरिणामः दशापर्य्यवसानम् अवस्थान्तरमित्यर्थः । संशयितं जीवितं यस्मिन् स चासौ अतएव दारुणश्चेति संशयितजीवितदारुणः ।

---

( ३८ ) हा हा देवि ! सीते ! हृदयं स्फुटति विदीर्य्यते, देहबन्धः शरीरबन्धनं स्रंसते शिथिलीभवति, जगत् विश्वं शून्यं मन्ये, अविरता अविश्रान्ता ज्वाला शोकाग्निशिखा यस्मिन् तद् यथा तथा अन्तः अन्तःकरणे ज्वलामि दग्धोऽस्मि, विधुरः कातरः अन्तरात्मा सीदन् अवसन्नः सन् अन्धे अन्धकरणे प्रगाढ़े इति यावत् तमसि अन्धकारे मज्जतीव निलीयत इव, तथा मोहः अचैतन्यं विष्वक् समन्तात् सर्वविषयानित्यर्थः स्थगयति आवृणोति मोहाच्छादनात् विश्वेषु न किमपि मे ज्ञानविषयीभवतीत्यर्थः । मन्दभाग्योऽहं कथं किं करोमि प्रतिविधानायेत्यर्थः । न कमप्युपायं पश्यामीति भावः । मन्दाक्रान्ता वृत्तम् ।

ाv.. थमद्यापि नोच्छ्वसिति, हा प्रियसखि! सीते! क्वासि, सम्भावयात्मनो जीवितेश्वरम् (ढ)।

सीता। ससम्भ्रममुपसृत्य हृदि ललाटे च स्पृशति।

वास। दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः।

रामः। आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा वहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरविधं तनोति मोहम्॥३९॥

[ आनन्दनिमीलिताक्ष एव ] सखि वासन्ति! दिष्ट्या वर्द्धसे।

वास। देव कथमिव?

रामः। सखि! किमन्यत्, पुनः प्राप्ता जानकी।

वास। अयि देव! क्व सा?

रामः। [ स्पर्शसुखमभिनीय। ] पश्य ननु इयं पुरत एव।

वास। अयि देव! किमिति मर्मच्छेददारुणैरेभिः प्रलापैः प्रियसखीदुःखदग्धामपि पुनर्मन्दभागिनीं मां दहसि।

सीता। ओसरिदुमिच्छामि, एसो उण चिरसब्भावसोम्मसीअलेण अज्जउत्तप्फंसेण दीहदारुणं वि सन्दावं झत्ति हरन्तेण वज्जलेवोवणद्धो विअ सिद्दन्तणीसहविपज्जत्थो वेवदि अवसो विअ मे हत्थो (४९)।

---

(४९) अपसर्त्तुमिच्छामि, एष पुनश्चिरसद्भावसौम्यशीतलेनार्य्यपुत्रस्पर्शेन

---

(ढ) सम्भावय आत्मप्रदर्शनेन सञ्जीवय।

(३९) संस्पर्शः अनुभूयमान इति शेषः अमृतमयैः सुधात्मकैः प्रलेपैः अन्तर्वा वहिरपि वा उभयविधानैरित्यर्थः शरीरधातून् देहोपादानभूतमांसासृङ्मज्जास्थिशिरात्वक्प्रभृतीन् आलिम्पन् सदयं व्याप्नुवन् सन् जीवयन् मामिति शेषः पुनरपि अकस्मात् अज्ञातकारणात् आनन्दात् अपरविधं सुखजन्यमित्यर्थः मोहं विषयान्तरापहरणरूपं तनोति विस्तारयति प्रवर्त्तयतीत्यर्थः। प्रहर्षिणीवृत्तम्।

रामः। सखि ! कुतः प्रलापाः।

गृहीतो यः पूर्वं परिणयविधौ कङ्कणधरः
चिरं स्वेच्छास्पर्शैरमृतशिशिरैर्यः परिचितः।

सीता। अज्जउत्त ! सो ज्जेव दाणिं सि तुमम् ? (५०)(ण)।

रामः। स एवायं तस्यास्तुहिनकरकौपम्यसुभगो
मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥४०॥

इति गृह्णाति (त)।

---

दीर्घदारुणमपि सन्तापं झटिति हरता वज्रलेपोपनद्ध इव स्विद्यन्निःसहविपर्य्यस्तो वेपतेऽवश इव मे हस्तः। चिरसद्भावेन चिरप्रणयेन अविचलितप्रेम्णा इत्यर्थः। सौम्यो मनोहरः शीतलः स्निग्धत्वेन वज्रेण यो लेपो लेपनं तेन उपनद्ध इव दृढनिबद्ध इव उत्थापयितुमशक्य इत्यर्थः। स्विद्यन् सात्त्विकभावोद्रेकात् घर्मवान् निःसहं नितरां विपर्य्यस्तः विरुद्धभावं गतः इदानीमेतादृशभावस्यानौचित्यादिति भावः।

(५०) आर्य्यपुत्र ! स एव इदानीमसि त्वम् ? स एव मदेकान्तानुरागवानित्यर्थः।

---

(ण) इदानीम् इदानीमपीत्यर्थः त्वं स एव असि मां प्रति तादृक्प्रणयवानेव असि त्वयि न कोऽपि विपर्य्ययो लक्ष्यते मम तु दशाविपर्य्ययः केवलमदृष्टाधीन इति भावः।

(४०) पूर्वं परिणयविधौ विवाहसंस्कारावसरे कङ्कणं कराभरणविशेषं यद्वा वैवाहिकमङ्गलसूत्रविशेषं धरतीति कङ्कणधरः यः प्रियायाः पाणिः मया गृहीतः, यः अमृतशिशिरैः सुधावच्छीतलैः सुखकरैरित्यर्थः स्वेच्छास्पर्शैः स्वेच्छया स्पर्शाः मत्कर्तृका इत्यर्थः तैः चिरं दीर्घकालं व्याप्य परिचितः परिज्ञातः इति पूर्वार्द्धार्थः। तस्याः सीतायाः तुहिनैः करकैः वर्षोपलैश्च सह यत् औपम्यमतिशीतलत्वात् सादृश्यं तेन सुभगः सन्तापहारकत्वात् सुसेव्यः, ललितं सुकुमारं यत् लवलीकन्दलं लवलीप्ररोहः तन्निभः तत्सदृशः स एव अयं पाणिः करः मया लब्धः प्राप्तः। शिखरिणी वृत्तम्।

(त) सीताहस्तमिति शेषः।

सीता। हद्धी हद्धी अज्जउत्तप्फंसमोहिदाए प्पमादो क्खु मे संवुत्तो (५१)।

रामः। सखि वासन्ति! आनन्दनिमीलितेन्द्रिय साध्वसेन परवानस्मि, तत्त्वं तावदेनां धारय (घ)।

वास। कष्टमुन्माद एव।

सीता। ससम्भ्रममाक्षिप्यापसर्पति *।

रामः। हा धिक् प्रमादः, हा धिक् प्रमादः।

करपल्लवः स तस्याः सहसैव जड़ाज्जड़ः परिभ्रष्टः।
परिकम्पिणः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥४१॥

सीता। हद्धी हद्धी अज्जवि अणवत्थिदत्थिमिदमूढ़घूसन्तणअणो ण पज्जवत्थावेदि अत्ताणअं (५२)।

---

(५१) हा धिक् हा धिक् आर्य्यपुत्रस्पर्शमोहितायाः प्रमादः खलु मे संवृत्तः। प्रमादः अनवधानताजनितो दोष इत्यर्थः।

(५२) हा धिक् हा धिक् अद्यापि अनवस्थितस्तिमितमूढ़घूर्णन्नयनो न

---

(घ) आनन्देन निमीलितानि अवशानि इन्द्रियाणि यस्य स तथोक्तः, साधु अत्यन्तम् अस्यते विक्षिप्यते अनेनेति साध्वसं हर्षातिरेकसम्भूतवैक्लव्यं तेन परवान् अस्मि पराधीनः अस्मि नाहमात्मनि प्रभवामीत्यर्थः। अतो नाहं सीतां धारयितुं शक्नोमीति भावः।

* आक्षिस्य आकृष्य रामधृतं स्वकीयं पाणिं बलादाकृष्य दूरमपसृतवतीत्यर्थः।

(४१) मम करात् तस्याः सीतायाः स करपल्लवः कोमलाङ्गुलिकरः परिभ्रष्टः पतितः। करात् इत्यस्य विशेषणानि जड़ात् परिकम्पिणः स्विद्यतः। करः इत्यस्य विशेषणानि क्रमेण जड़ः प्रकम्पी स्विद्यन्। एतेन रामसीतयोरुभयोरपि समः सात्त्विकभावाधिगमः सूचितः। सात्त्विकभावश्च साहित्यदर्पणे, स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः। मात्रा वृत्तम् आर्य्याजातिः।

राम। सस्नेहहासकौतुकं निर्वर्ण्य।

सस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा।
मरुन्नवाम्भःप्रविधूतसिक्ता कदम्बयष्टिः स्फुटकोरकेव ॥४२॥

सीता। [ स्वगतम्। ] अम्महे! अवसेण एदेण अत्ताणएण लज्जाविदह्मि भअवदीए तमसाए, किंत्ति किल एसा मणिस्सदि एसो दे परिच्चाओ एसो अ हिअआसङ्गोत्ति (५३) (द)।

राम। [ सर्वतोऽवलोक्य। ] कथं नास्त्येव, ननु अकरुणे वैदेहि!

सीता। सच्चम् अकरुणह्मि, जा एवं विधं तुमं पेक्खन्ती धरामि ज्जेव जीविदम् (५४)।

---

पर्य्यवस्थापयत्यात्मानम्। अनवस्थिते अस्थिरे स्तिमिते निश्चले मूढ़े विषयज्ञानरहिते तथा घूर्णन्ती विषयग्रहार्थमितस्ततः धाविते नयने चक्षुषी यस्य सः। न पर्य्यवस्थापयति प्रकृतिस्थं करोति तथा कर्त्तुं न शक्नोतीर्थः।

(५३) अहो! अवशेन एतेनात्मना लज्जापितास्मि भगवत्या तमसया, किमिति किल एषा मंस्यते एष ते परित्यागः एष च हृदयासङ्ग इति। ?

(५४) सत्यमकरुणास्मि, या एवंविधं त्वां पश्यन्ती धराम्येव जीवितम्।

---

(४२) वत्सा सीता प्रियस्य रामस्य स्पर्शजनितेन सुखेन हेतुना सस्वेदानि स्वेदार्द्राणि रोमाञ्चितानि पुलकितानि कम्पितानि च अङ्गानि यस्याः सा तथोक्ता सती मरुता वायुना नवाम्भसा च वर्षारम्भे नवदृष्टजलेन च यथाक्रमं प्रविधूता कम्पिता सिक्ता चर्चिता च सती तथा स्फुटा विकसिताः कोरकाः कलिका यस्याः सा तथाभूता कदम्बयष्टिः कदम्बशाखेव जाता। वृत्तमुपजातिः। अलङ्कारः उपमा।

(द) लज्जापितास्मि लज्जामापितास्मि। यद्वा लज्जधातोर्ण्यन्तात् आप् ततः क्तः। हृदयासङ्गः चेतोऽनुरागः। परित्यागे हृदयानुरागस्यानौचित्यात् लज्जेति भावः।

रामः। क्वासि देवि! प्रसीद न मामेवंविधं परित्यक्तु-मर्हसि।

सीता। अइ अज्जउत्त विवरीदं विअ एदं (५५) (ध)।

वास। देव! प्रसीद प्रसीद, स्वेनैव लोकोत्तरेण धैर्य्येण संस्तभ्यातिभूमिगतविप्रलम्भमात्मानं (न) कुतोऽत्र मे प्रिय-सखी सीता।

रामः। व्यक्तं नास्ति, (प) कथमन्यथा वासन्ती अपि तां न पश्येत्, अपि खलु स्वप्न एष स्यात्, न चास्मि प्रसुप्तः कुतो वा रामस्य स्वप्नः, सर्वथा स एवैष भगवान् अनेकवारपरि-कल्पनानिर्मितो विप्रलम्भः पुनः पुनरनुबध्नाति (फ)।

---

(५५) अयि आर्य्यपुत्र! विपरीतमिवेदम्।

---

(ध) अयि आर्य्यपुत्र विपरीतमिवैतत्। एतत् त्वदुक्तं मयि विपरीतं विरुद्धमिव आभातीति शेषः। यतस्त्वमेव मां परित्यक्तवान् नाहं त्वां परि-त्यक्तवती। पतिव्रता विनीता सीता रामवाक्यमन्यथा प्रतिपादयितुं न शक्नोति द्योतनाय इव शब्दप्रयोगः।

(न) स्वेन स्वकीयेन स्वाभाविकेन। लोकोत्तरेण असाधारणेन। संस्त-म्भय स्थिरीकुरु। अतिक्रान्ता भूमिं चरमसीमाम् अतिभूमिः तां गतः सीमा-तिग इत्यर्थः विप्रलम्भो विरहशोको यस्य तं तथोक्तम्।

(प) व्यक्तं नास्ति नास्तीति व्यक्तं सत्यमित्र नास्तीत्यर्थः।

(फ) अनेकवारं बहुशः परिकल्पना पुनः पुनः चिन्ता तया निर्मितः उत्पादितः निरन्तरचिन्ताजन्य इत्यर्थः स एव पूर्वं बहुशः अनुभूत इत्यर्थः विप्र-लम्भः भ्रमः मृगतृष्णिकावत् शून्येऽपि सीतादर्शनादिरूपः पुनः पुनः माम् अनु-बध्नाति मया सह धावति इतः पूर्वं बहुवारम् अनेनाहं विप्रलब्धः सम्प्रत्यपि तथैव जात इत्येवमत्यन्तं प्रतारितोऽस्मीति भावः। तस्य दुर्निवार्य्यत्वैश्वर्य्ययोगो भगवानित्यनेन व्यज्यते।

सीता। मए ज्जेव दारुणाए विप्पलद्धो अज्जउत्तो (५६)।

वास। देव! पश्य पश्य।

पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः
पश्यैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः।
खड्गच्छिन्नजटायुपक्षतिरितः, सीतां ज्वलन्तीं वहन्
अन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिः॥ ४२॥

सीता। [सभयम्।] अज्जउत्त! तादो वावादीअदि, अहञ्च अवहरिआमि, परित्ताहि परित्ताहि (५७)।

---

(५६) मयैव दारुणया विप्रलब्ध आर्य्यपुत्रः। दारुणया निष्करुणया। विप्रलब्धः प्रतारितः।

(५७) आर्य्यपुत्र! तातो व्यापाद्यते, अहञ्चापह्रिये, परित्रायस्व परित्रायस्व। ततो जटायुः व्यापाद्यते हन्यते, रावणेनेति शेषः।

---

(४२) जटायुषा जटायुर्नामकगृध्रराजेन, जटापरिमाणमायुर्यस्येति तेन, चिरकालजीवित्वात्तस्येयं संज्ञा। विघटितः भग्नः पौलस्त्यस्य पुलस्त्यपुत्रस्य रावणस्य कार्ष्णायसः कृष्णवर्णधातुना लौहविशेषेण निर्मितः अयं दृश्यमानः रथः वर्त्तते पश्य त्वमिति शेषः। पुरतः अग्रतो वर्त्तमाना पिशाचवदना विकटमुखा इत्यर्थः कङ्कालशेषाः अस्थिपञ्जरावशिष्टाः खराः जटायुनिहता रावणरथवाहनमहाकायखचरविशेषाः वर्त्तन्ते तानपि पश्येत्यूह्यम्। इतः अस्मात् पुरतो निर्दिश्यमानात् स्थानात् अरिः शत्रुः रावण इत्यर्थः खड्गेन छिन्ने जटायोः पक्षती पक्षमूले येन स तथोक्तः सन् अच्छिन्नेव स्थाने जटायोः पक्षती छिन्ने इत्यर्थः ज्वलन्तीं लावण्यमय्या कान्त्या जाज्वल्यमानां सीतां वहन् गृह्णन् अन्तः अभ्यन्तरे व्याकुला चञ्चला विद्युद् यस्य स तथोक्तः अम्बु ददातीति अम्बुदो मेघ इव रावणस्य राक्षसस्य कृष्णवर्णत्वात् वृहत्कायत्वाच्च मेघौपम्यं द्याम् आकाशं, द्योदिवौ द्वे स्त्रियावभ्रं व्योमपुष्करमम्बरं नभोऽन्तरीक्षं गगनमित्याद्यमरः। अभ्युदस्थात् अभ्युत्पपात। शार्दूलविक्रीडितं वृत्तम्।

रामः । [ सवेगमुत्थाय । ] आः पाप ! तातप्राणसीताप-हारिन् ! क्व यासि * ।

वास । अयि देव राक्षसकुलप्रलयधूमकेतो ! अद्यापि ते मन्युविषयः ? । †

सीता । अहो उम्मत्तिम्ह् म्हि संवुत्ता (५८) ।

रामः । अन्वर्थ एवायमधुना प्रलापो वर्त्तते (ब) ।

उपायानां भावादविरतविनोदव्यतिकरैः
विमर्दैर्वीराणां जगति जनितात्यद्भुतरसः ।

---

( ५८ ) अहो ! उन्मत्ताऽस्मि संवृत्ता । उन्मत्तो हि अतिक्रान्तविषयमपि वर्त्तमानतया गृह्णाति तादृशविषयग्रहणं ममापि वर्त्तते, अतोऽहम् उन्मत्तास्मि अन्यथा कुत एतद्रावणादिदर्शनम् इति भावः ।

---

* तातस्य जटायोः प्राणान् सीताञ्च अपहरति यः सः, तत्सम्बोधने ।

† राक्षसकुलस्य प्रलयधूमकेतुस्तत्सम्बोधने । प्रलयकाले धूमकेतुर्यथा लोकानां क्षयकारस्तथा त्वमपि राक्षसानामित्यर्थः । मन्युविषयः क्रोधपात्रम् असीति काकुः अधुनाऽपि स वर्त्तते नास्त्येवेत्यर्थः ।

( ब ) अधुना सम्प्रति रावणाद्यभावात् अर्थमनुगतः अन्वर्थो यथार्थ एव अयम्, आः पापेत्यादि मत्कृतः प्रयोगः प्रलापः निर्विषया वाक् वर्त्तते प्रवर्त्तते । रावणाद्यभावादधुना तादृशः प्रयोगः निरर्थकतया प्रतिपन्नो भवतीत्यर्थः । यथार्थमेव इदम् अनर्थकं वचः अधुना वर्त्तते । एवं सीतास्पर्शादिव्यापारोऽपि परिकल्पनानिर्मित एव न पुनरधुना सन्देहविषयः ।

( ४४ ) रावणापहृतायां सीतायां तद्वियोगः सोढ़ः कथमिदानीं न सह्यते कथं वा एतादृशः प्रलापादिः प्रवर्त्तते इत्याशङ्क्यात्मदोषं निवारयति । उपायानामिति । उपायानां पुनः सीताप्राप्तेः साधनानां भावात् सद्भावात् अधुना तु उपायाभाव इत्यर्थः । अविरताः अविश्रान्ताः ये विनोदाः उद्धारार्थं सीतान्वेषणसेतुबन्धनवैरनिर्यातनमन्त्रणाविजयलाभादिव्यापारास्तेषां व्यतिकरः सम्पर्को मिलनमिति यावत् तेषु तादृशैर्वीराणां विमर्दैः परस्परमिलनदर्शनाम-

वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्
कथं तूष्णीं सह्यो निरवधिरिदानीन्तु विरहः ॥ ४४ ॥

सीता। णिरवधित्ति हा हदम्हि मन्दभाइणी (५८)।

इति रोदिति।

रामः। हा कष्टम्।

व्यर्थं यत्र कपीन्द्रसख्यमपि मे, वीर्य्यं हरीणां वृथा,
प्रज्ञा जाम्बवतोऽपि, यत्र न गतिः पुत्रस्य वायोरपि।

---

(५८) निरवधिरिति हा हतास्मि मन्दभागिनी।

निरवधिरिति पूर्ववत् विरहावसानं समागमसम्भावना च इत्यहं हतास्मि पुनःसमागमाशयैव जीविता अधुना तदभावात् मृत्युयातनावन्निरतिशययातना मां परिभवति न तां सोढुं शक्नोमीति भावः।

---

र्षणघर्षणनिधनादिव्यापारैः जगति जनितः उत्पादितः अति उत्कटम् अद्भुतः विस्मयः एव रसयतीति रसः मनसो द्रुतिकारणं येन स तथोक्तः अधुना तु विनोदकारणाभावान्न तादृश इत्यर्थः। मुग्धे मनोहरे अक्षिणी लोचने यस्याः तस्यास्तथोक्तायाः सीतायाः वियोगः विरहः खलु प्रसिद्धौ रिपूणां शत्रूणां रावणादीनां घातो वध एव अवधिः पर्य्यन्तः यस्य स तादृशः अभूत् इदानीन्तु अधुना तु उपायाभावादप्रतिविधेयस्य विनोदाभावाद् दुःसहस्य इति पूर्वसूचितः नास्ति अवधिरन्तो यस्य स तथोक्तः अनन्तो विरहः कथं तूष्णीं व्यापारान्तराभावात् वाक्यात्वं विनापि सह्यः सहनीयः। न कदापि सहनीय इत्यर्थः अतएव नैष प्रलापः अनैसर्गिक इत्यधिक्षेपणीयः न वा विस्मयजनकः अपि तु नैसर्गिकत्वादवश्यम्भावी एव। शिखरिणीवृत्तम्।

(४५) यत्र यस्मिन् स्थाने मे मम कपीन्द्रसख्यं सुग्रीवमैत्रम् अपि व्यर्थं निष्फलं न पूर्ववदुद्धारक्षममित्यर्थः। हरीणां वानराणां चमूभूतानामित्यर्थः। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिष्वित्यमरः। वीर्य्यं पराक्रमः वृथा निष्फलम्। यत्र जाम्बवतः भल्लूकपतेरपि प्रज्ञा प्रखरा बुद्धिः वृथेति शेषः। यत्र वायोः पुत्रस्य हनूमतोऽपीत्यर्थः गतिः न अस्तीति शेषः। यत्र विश्वकर्मतनयो नलोऽपि मार्गं सेतुबन्धनादिना पन्थानं कर्त्तुं न क्षमः न समर्थः सौमित्रेः

मार्गं यत्र न विश्वकर्मतनयः कर्त्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये तत्र प्रिये! क्वासि भोः ॥४५॥

सीता। बहु मण्णाविदह्मि तं पुव्वविरहं (६०)

रामः। सखि वासन्ति! सुहृदामिदानीं दुःखायैव रामस्य दर्शनं, तदिदं कियच्चिरं त्वां रोदयिष्यति, तदनुजानीहि मां गमनाय।

सीता। [सोद्वेगं तमसामवलम्ब्य।] भअवदि तमसे! गच्छदि ज्जेव अज्जउत्तो (६१)।

तम। वत्से! समाश्वसिहि समाश्वसिहि, ननु आवामपि आयुष्मतोः कुशलवयोर्वर्षवर्द्धनमङ्गलानि सम्पादयितुं भागीरथीपदान्तिकमेव गच्छावः।

सीता। भअवदि! पसीद, खणमेत्तंबि दाव दुल्लहं जणं पेक्खामि (६२)।

---

(६०) बहु मानितास्मि तं पूर्वविरहम्। एतेन रामवचनेन अस्मि अहं पूर्वविरहं रावणहरणजन्यं वियोगं बहु यथा स्यात्तथा बहु क्लेत्यर्थः मानितास्मि मन्यते, आन्तात् क्तः ततः आप्।

(६१) भगवति तमसे! गच्छत्येवार्य्यपुत्रः।

(६२) भगवति! प्रसीद, क्षणमात्रमपि तावत् दुर्लभं जनं पश्यामि।

---

लक्ष्मणस्यापि पत्रिणां बाणानामविषये यत् लक्ष्मणस्यापि बाणानाम् अविषय इत्यर्थः एवम्भूते तत्र मम अज्ञाते इत्यर्थः क्व कुत्र स्थाने हे भो मम प्रिये जानकि! असि वर्त्तसे? पूर्वं सुग्रीवस्य सैन्यादिदानसाहाय्यात् वानराणां पराक्रमबाहुल्यात् जाम्बवतो मन्त्रणाबलात् हनूमतो जलधिलङ्घनसीतोद्देशनब्रह्मास्त्रानयनादिसार्वभौमिकव्यापारात् नलस्य सेतुबन्धनसौष्ठवात् लक्ष्मणस्य इन्द्रजितादिबधक्षमाद्भुतयुद्धकौशलात् त्वमुद्धृतासीः अधुना तु तेषां सर्वेषामेव वैफल्यं पश्यामीति नितान्तं निराशोऽस्मीति भावः। शार्दूलविक्रीडितं वृत्तम्।

रामः। अस्ति चेदानीमश्वमेधाय सहधर्मचारिणी मे (म)।

सीता। [ साक्षेपं स्वगतम्। ] अज्जउत्त ! का सा (६३)।

रामः। हिरण्मयी सीतायाः प्रतिकृतिः।

सीता। [ सोच्छासं सास्रम्। ] अज्जउत्तो दाणीं सि तुमं, अम्मए उक्खाणिदं, दाणीं मे परिच्चाअलज्जासल्लं अज्जउत्तेण (६४) (म)।

रामः। तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि।

सीता। धस्सा सा, जा अज्जउत्तेण बहु मणाअदि, जा अ अज्जउत्तं विणोदयन्ती आसानिबन्धणं जादा जीअलोअस्स (६५) (य)।

---

(६३) आर्य्यपुत्र ! का सा ? का, सहधर्मचारिणीति शेषः।

(६४) आर्य्यपुत्र इदानीमसि त्वम्, अहो ! उत्खातमिदानीं मे परित्यागलज्जाशल्यमार्य्यपुत्रेण।

---

(म) सैव मे विनोदोपायो भविष्यतीति भावः।

(म) मत्प्रतिकृतावपि अनुरागितया यथार्थ एव आर्य्यपुत्रशब्दभाक् त्वमसि इत्यर्थः। परित्यागजन्या या लज्जा लोकसन्निधौ अप्रतिभत्वं तद्रूपं यत् शल्यं तदुत्खातं मम हृदयादुद्धृतमार्य्यपुत्रेण। मत्प्रतिकृतिकरणात् मयि अनुरागो मत्पवित्रता च लोकेषु प्रदर्शिता आर्य्यपुत्रेणेति भावः।

(य) रामस्य परिग्रहान्तरशङ्कितायाः सीतायाः श्रुतप्रतिकृतिवृत्तान्ताया अपि पूर्वावेगवशात्, तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामीति रामवाक्याच्च पुनरुत्पादिततत्शङ्कायाः सीताया निर्वेदवचनमिदम्। अत्र सा धन्या अहम् अधन्या, सा बहुमानिता अहम् अवमानिता, सा आर्य्यपुत्रस्य विनोदनस्थानम् अहं न तथा सा आर्य्यपुत्रस्य सुस्थतायाः राज्ये अनौदास्यस्य च कारणमिति आशानिबन्धनम् अहन्तु न तथा इत्यादि व्यज्यते। एतेन स्त्रियः स्वामिनः सर्वानपराधान् सहन्ते किन्तु दारान्तरपरिग्रहं सर्वथा न सहन्ते इति भावोऽपि व्यज्यते।

तम। [ सस्मितस्नेहास्रं परिष्वज्य । ] अयि वत्से ! एवमात्मा स्तूयते ( र )।

सीता। [ सलज्जमधोमुखी स्वगतम् । ] परिहसिदह्मि भअवदीए तमसाए ( ६६ )।

वास। महानयं व्यतिकरोऽस्माकं प्रसादः। गमनं प्रति पुनर्यथा कार्य्यहानिर्न भवति तथास्ताम् ( ल )।

सीता। पडिउला दाणीं मे वासन्दी संवुत्ता ( ६७ )।

तम। वत्से ! एहि गच्छावः।

सीता। [ सकष्टम् । ] एव्वं करेम्ह ( ६८ )।

तम। कथं वा गम्यते यस्यास्तव।

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः।

---

( ६५ ) धन्या सा, या आर्य्यपुत्रेण बहु मन्यते, या च आर्य्यपुत्रं विनोदयन्ती आशानिबन्धनं जाता जीवलोकस्य।

( ६६ ) परिहसितास्मि भगवत्या तमसया।

( ६७ ) प्रतिकूला इदानीं मे वासन्ती संवृत्ता। प्रतिकूला रामसमागमे विघ्न-कारिणी तद्गमनानुज्ञानादिति भावः।

( ६८ ) एवं कुर्मः। गच्छाव इत्यर्थः।

---

( र ) एवमात्मा स्तूयते त्वत्प्रतिकृतिमेवोद्दिश्य रामेणैतदुक्तम् अतो धन्या सा इत्यादिना त्वम् आत्मप्रशंसनमेव करोषीति भावः।

( ल ) अस्माकमयं व्यतिकरः समागमः महान् प्रसाद्यते अनेनेति प्रसादः कर्त्तव्येषु विषयान्तरेषु अनवधानताजनक इत्यर्थः अनेन समागमेन त्वमपि मां परित्यक्तु नेच्छसि अहमपि न त्वां शोके च वयं निमग्ना इति सर्वमन्यत् विस्मृता-ऽस्मीत्यर्थः। कुत एतदित्याह गमनं प्रतीति। अहं त्वत्कर्त्तव्येऽन्तरायो न स्यामित्येव स्मरणार्थं वदामि गमनं प्रति पुनर्यथेत्यादि। तव कार्य्यहान्या ममापि हानिरित्यतो येन कार्य्यहानिर्न स्यात् तथा कुर्विति भावः।

मर्मच्छेदपरैर्यत्नै राकर्षो न समाप्यते ॥ ४६ ॥

सीता । णमो णमो अपूव्वपुस्सजणिददंसणाणं अज्जउत्तचरणकमलाणं ( ६९ ) ( व ) ।

इति मूर्च्छति ।

तम । वत्से ! समाश्वसिहि समाश्वसिहि ।

सीता । [समाश्वस्य ।] किअच्चिरं वा मेहन्तरेण पुस्सिमाचन्दस्स दंसणं ( ७० ) ( श ) ।

---

( ६९ ) नमो नमोऽपूर्वपुण्यजनितदर्शनेभ्यः आर्य्यपुत्रचरणकमलेभ्यः ।

( ७० ) कियच्चिरं वा मेघान्तरेण पूर्णिमाचन्द्रस्य दर्शनम् ।

---

( ४६ ) कथं केन प्रकारेण वा गम्यते गन्तुं शक्यते । कुत एतदित्याह यस्या इति यस्यास्तव दयिते प्रिये रामे प्रत्युप्तस्येव गभीरं प्रविष्टस्येव तृष्णया प्रबलदर्शनेच्छया दीर्घस्य दीर्घभावापन्नस्य कियत्कालकृतदर्शनत्वात् तृप्तस्य इव । अतृप्ततया विस्फारितत्वादनिमिषत्वाच्च दीर्घस्येवेत्यर्थः चक्षुषः मर्मच्छेदपरैः आकर्षणव्यापारे हृदयविदारकैरित्यर्थः यत्नैः आकर्षः दयितदर्शनात् आक्षेपः न समाप्यते एतावता कालेनापि न सम्पूर्णः क्रियते । यथा केनाचिद् योजकवस्तुना युक्तस्य पदार्थान्तरस्य योजकवस्तूद्धरणं विना न परस्परं पार्थक्यं सम्भवति तद्वत् दृष्ट्या मिलितायास्तव दृष्ट्युद्धारं विना न इतो गमनं सम्भवति दृष्टेरुद्धारश्च आकर्षादिना शल्योद्धारवन्मर्मव्यथाजनकः स च नितरां दुःसहः अतो रामम् इतः परित्यज्य तव अन्यत्र गमनं न सुकरमिति भावः ।

( व ) अपूर्वेण अत्युत्कटेन पुण्येन जनितं दर्शनं येषां तेभ्यः मया किमपि अपूर्वं पुण्यं कृतं तेनाद्य आर्य्यपुत्रचरणदर्शनं जातमिति भावः ।

( श ) मेघाच्छन्ने दुर्दिने कदाचित् पूर्णचन्द्रदर्शनमिव ईदृश्यां ग्रहवैगुण्यदशायां मम आर्य्यपुत्रदर्शनं सुदुर्लभमेव केवलं पूर्वकृतपुण्यवायोरानुकूल्येन कथञ्चित् क्षणिकं दर्शनमासम् अतो नाहं मन्दभागिनी अनेनैव आश्वस्तास्मीति भावः ।

तम। अहो संविधानकम् ।

एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान् ।
आवर्त्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा, सलिलमेव तु तत् समग्रम् ॥ ४७ ॥

रामः। अयि विमानराज ! इत इतः ।

इति सर्वे उत्तिष्ठन्ति ।

तमसावासन्त्यौ सीतारामौ प्रति ।

अवनिरमरसिन्धुः सार्द्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता ।

---

(४७) संविधानकं विधातृनियमितकार्य्यकारणभाववैचित्र्यं केन कारणेन किं किं कार्य्यमुत्पाद्यते तन्निरूपणे न शक्यमित्यर्थः। तदेव समर्थयति एक इति। एक एव करुणो रसः प्रियविच्छेदजन्यो मनोविकारः निमित्तभेदात् दर्शनस्मृत्यादिकारणविशेषादित्यर्थः। भिन्नः सन् पृथक् पृथक् विवर्त्तान् भिन्नरूपान् हर्षविषादादिरूपानित्यर्थः आकारान् आश्रयते। यथा अम्भः जलम् आवर्त्तबुद्बुदतरङ्गमयान् गतिवशेन घूर्णमानत्वात् वायुमध्यतया विम्बमयत्वात् पवनचालिततया तरङ्गात्मकत्वाच्च विविधान् आकारान् आश्रयते इति शेषः, तु किन्तु तत् समग्रमेव एकं सलिलं जलरूप एक एव पदार्थः। सीतायाः प्रियविरहजन्यमनोविकारोऽपि कारणभेदात् हर्षविषादक्रीमृतिधृतिनिर्वेदासूया-प्रभृतीन् बहूनाकारान् धत्ते। अतो हर्षादयोऽपि करुणरसस्य विकारा इत्येतदाश्चर्यं संविधानकं धस्मानीत्यर्थः। वसन्ततिलकं वृत्तम्। अलङ्कारः उपमा।

(४८) अवनिः पृथ्वी, अमरसिन्धुः सुरधुनी गङ्गा, अस्मद्विधाभिः अस्मादृशीभिः तमसासदृशीभिः नदीभिः वासन्तीसदृशीभिः वनदेवताभिश्चेत्यर्थः सार्द्ध छन्दसाम् एकत्र अनुष्टुप्संहतीनामित्यर्थः आद्यः प्रयोक्ता तत्पूर्वमेकत्र बहुलानुष्टुप्छन्दसां प्रयोगादर्शनात् कुलपतिः मुनीनां दशसाहस्र योऽन्नपानादि-

स च मुनिरनुयातारुन्धतीको वशिष्ठ-
स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय ॥ ४८ ॥

इति निष्क्रान्ताः सर्वे।

इति छाया नाम तृतीयोऽङ्कः।

---

# अथ चतुर्थोऽङ्कः।

ततः प्रविशतस्तापसौ।

एकः। सौधातकि! दृश्यतामद्य (क) भूयिष्ठसन्निधापितातिथिजनस्य समधिकारम्भरमणीयता भगवतो वल्मीकेराश्रमपदस्य। तथाहि,

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूताप्रिया-
पीतादत्यधिकं तपोवनमृगः पर्य्याप्तमाचामति।

---

पोषणात्। अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृत इति लक्षणोपेतः मुनिर्वाल्मीकिः अनुयाता अनु सह धर्मार्थं याता सहधर्मिणीत्यर्थः अरुन्धती यस्य तथोक्तः स मुनिः वशिष्ठश्च भूयसे महते मङ्गलाय भुवनहितायेत्यर्थः त्वयि भद्रं मङ्गलं वितरतु ददातु। त्वन्मङ्गलेनैव भुवनमङ्गलमिति भावः। मालिनीवृत्तम्।

---

(क) भूयिष्ठं बाहुल्येन सन्निधापिताः निमन्त्रणेन जनरवेण च समुपस्थापिता अतिथिजना यस्मिन् तस्य तथोक्तस्य भगवतो वाल्मीकेराश्रमपदस्य अद्य समधिकारम्भरमणीयता अतिथिसेवार्थं बहुतरस्थानासनपानभोजनपरिवेशनादिकार्य्यगौरवात् रमणीयता दृश्यतामनुभूयताम्।

(१) तपोवनमृगः आश्रमहरिणः सद्यः प्रसूतया अचिरमुक्तगर्भया प्रियया स्वपत्न्या पीतात् अत्यधिकम् अतिरिक्तं पीतावशिष्टमित्यर्थः उष्णं मधुरञ्च सुखा-

गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मत:
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्य्यते ॥ १ ॥

सौधा। आअदं अणज्झाअकारणं सविसेसभूदं अज्ज जिण्णकुच्चाणं (१)। (ख)

प्रथमः। [ विहस्य। ] (ग) अपूर्वः कोऽपि ते बहुमान-हेतुर्गुरुषु सौधातके!।

सौधा। भो भाण्डाअण! किंणामधेओ एसो महन्तस्स त्थविरसत्थस्स धुरन्धरो अज्ज अदिधी आअदो (२) (घ)।

---

(१) आगतमनध्यायकारणं सविशेषभूतमद्य जीर्णकूर्चानाम्।

(२) भो भाण्डायन! किंनामधेय एष महतः स्थविरसार्थस्य धुरन्धरोऽद्य अतिथिरागतः।

---

द्यमित्यर्थः नीवारौदनमण्डं पर्य्याप्तं यथेष्टं यथा तथा आचामति पिबति। मण्डस्य बहुलत्वात् सद्यःप्रसूतापि मृगी न समस्तं मण्डं भोक्तुं शशाक अव-शिष्टेन मृगस्यापि पर्य्याप्त आहारोऽभूदित्यर्थः। किञ्च सर्पिष्मतः सघृतस्य घृत-पक्वस्येत्यर्थः भक्तस्य अन्नस्य स्फुरता उद्गच्छता गन्धेन सौरभेण मनाक् ईषत्; मनागप्यल्पमन्दयोरिति मेदिनी। अनुसृतः अनुगतः मिश्रित इत्यर्थः। कर्कन्ध्वाः कोल्याः फलैः मिश्राणां शाकानां वास्तूकादीनां पचनादुत्थित आमोदः घृत-पक्वभक्तामोदसहितः कोलिफलमिश्रशाकपाकादन्नगन्धविशेष इत्यर्थः परिस्तीर्य्यते सर्वतो व्याप्नोति। शार्दूलविक्रीडितं वृत्तम्।

(ख) अद्य जीर्णकूर्चानां पक्वश्मश्रूणामतिवृद्धानामित्यर्थः। सविशेषभूतं विशेषरूपम् अनध्यायकारणं पाठनिषेधहेतुः। सोपहासवचनमिदम्।

(ग) हे सौधातके! गुरुषु अपूर्वः प्रधानं कोऽपि असाधारणः इत्यर्थः बहु-मानस्य विशिष्टगौरवस्य हेतुः कारणम् अस्तीति शेषः। तन्न युक्तं तेषु एवं कथयितुमिति भावः।

(घ) स्थविरसार्थस्य वृद्धसमूहस्य, धुरन्धरः श्रेष्ठः स्थविरधुरन्धर इति हास्य-करः प्रयोगः।

भाण्डायनः । (ङ) धिक् प्रहसनम् । नन्वयमृष्यशृङ्गाश्रमादरुन्धतीपुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भगवान् वशिष्ठः प्राप्तस्तत्किमिवं प्रलपसि ।

सौधा । हुं वसिट्ठो (३) ।

भाण्डा । अथ किम् (च) ।

सौधा । मए उण जाणिदं, वग्धो वा विओ वा एसो त्ति (४) । (छ)

भाण्डा । आः किमुक्तं भवति ? । (ज)

सौधा । तेण परावडिदेण ज्जेव सा वराइआ कल्लाणिआ मडमडाइदा (५) । (झ)

भाण्डा । समांसो मधुपर्क इति आम्नायं बहुमन्यमानाः

---

(३) हुं वशिष्ठः ।

(४) मया पुनर्ज्ञातं, व्याघ्रो वा वृकी वा एष इति ।

(५) तेन परापतितेनैव सा वराकिका कल्याणिका मड्मडायिता ।

---

(ङ) प्रहसनं गुरुजनान् प्रति उपहासः, असम्मानसूचकवाक्यप्रयोग इत्यर्थः । धिक् निन्दितमित्यर्थः । स्थविरसार्थस्य धुरन्धर इति प्रयोग एव हास्यजनकः ।

(च) अथ किम्, सम्मतिसूचकपदमिदम् । (और क्या) ।

(छ) बहुरोमपूर्णसर्वशरीरत्वात् व्याघ्रो वा इत्यादि । सोपहासोक्तिरियम् ।

(ज) किमेतदयुक्तं भाषसीत्यर्थः । महांस्ते अनुचितवाक्प्रयोग इति भावः । यदा श्रेष्ठं वृद्धतमं वशिष्ठमेवमुपहससि ।

(झ) परापतितेनैव आगतमात्रेणैव व्याघ्रादिवदित्यर्थः । सा अस्मत्परिचिता वराकिका दीना प्रोच्येत्यर्थः कल्याणिका वत्सतरी मड्मडिति शब्देन भक्षिता । तत् कथं न भणामि व्याघ्रो वा वृको वेत्यादीति भावः ।

(ञ) समांसो मांससहितः, मधुना पृच्यते असाविति मधुपर्कः मधुसंयुक्त-

श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षं वा निर्वपन्ति गृहमेधिनः, तं हि धर्मसूत्रकाराः समामनन्ति। (ञ)

सौधा। भो णिग्गहीदोऽसि। (ट)

भाण्डायनः। कथमिव।

सौधा। जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा, अज्ज ज्जेव पच्चागदस्स राएसिणो जणअस्स भअवदा वम्मीएणवि दहिमहूहिं ज्जेव णिव्वत्तिदो महुवक्को, वच्छदरी उण विसज्जिदा। (ठ)

---

दध्यादिः (मधु+पृच्+घञ्)। स च पूर्वमुक्तः। मधुपर्कश्च श्रोत्रियाय प्रदेयः समांसो विहित इत्येवंरूपम् आम्नायं वेदवचनं बहुमन्यमानाः आद्रियमाणाः गृहैर्दारैर्मेधन्ते सङ्गच्छन्ते इति गृहमेधिनः गृहाश्रमस्था अभ्यागताय गृहागताय श्रोत्रियाय वत्सतरीम् अल्पवयस्कां गोवत्सां, महान्तम् उक्षाणं महोक्षं महावृषभं, महाजं बृहच्छागं निर्वपन्ति ददति। धर्मसूत्रकारा धर्माभिधार्थं विधिनिषेधजनकोपदेशसूत्ररचयितारः धर्मशास्त्रप्रणेतार इत्यर्थः इत्येवं समामनन्ति समुपदिशन्ति हि निश्चयवाचकः। तदनुसारेणैव अद्य परमश्रोत्रियाय वशिष्ठाय कल्याणिका दत्तेति भावः। श्रोत्रियलक्षणञ्च, एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा। षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मविदिति देवलः। तथाच, जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते इति शाङ्करभाष्यम्। आम्नायते अभ्यस्यते इत्याम्नायः। आपूर्वम्नाधातोर्घञ्। वत्सतरीति क्षुद्रार्थे तरप्प्रत्ययः। निर्पूर्ववप्धातुर्दाने वर्त्तते।

(ट) निगृहीतः पराभूतः। इत्यनेन भाण्डायनस्य ज्ञानवत्त्वमुपहसति। मधुपर्कस्य जीवहिंसासमेतस्य शास्त्रार्थत्वे सर्वत्रैव तदनुष्ठानं स्यात् तत्तु न भवतीति त्वम् अनर्थकं कथयसीति भावः।

(ठ) येन आगतेषु वशिष्ठमिश्रेषु वत्सतरी विशसिता, अद्य एव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभिरेव निर्वर्त्तितः मधुपर्कः, वत्सतरी पुनर्विसृष्टा। अनर्थकवचनं द्रढयति। येन हेतुना वशिष्ठमिश्रेषु महामान्येषु वशिष्ठमिश्रेषु आगतेषु सत्सु वत्सतरी विशसिता मारिता, किन्तु मया सम्यक् ज्ञातमित्यर्थः यदद्य एव प्रत्यागतस्य राजर्षेर्जनकस्य सम्मानार्थं मधुपर्कः वाल्मीकिना प्राचीनब्रह्मविदा महर्षिणेत्यर्थः दधिमधुभिरेव निर्वर्त्तितः

भाण्डा। अनिवृत्तमांसानामेवं कल्पमृषयो मन्यन्ते निवृत्तमांसस्तु तत्रभवान् जनकः। (ड)

सौधा। किं णिमित्तम्? (६) (ढ)

भाण्डा। स तदैव सीतादेव्याः तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः, तथास्य कतिपये संवत्सराश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य। (ण)

---

(६) किं निमित्तम्।

---

सम्पादितः वत्सतरी पुनर्विसृष्टा। किन्तु वत्सतरी मधुपर्के परित्यक्ता न दत्ता इत्यर्थः। सामान्यतो मधुपर्कस्य दधिघृतमधुशर्कराम्बुविहितत्वात् उक्तञ्च, दधि सर्पिर्जलं चौद्रं सिता चैतैश्च पञ्चभिः। प्रोच्यते मधुपर्कस्तु क्वचिदन्यविधोऽपि चेति।

(ड) मांसादनिवृत्तानां मांसभक्षणशीलानामित्यर्थः अतिथीनामिति शेषः ऋषयः धर्मशास्त्रप्रणेतारः मुनयः एवं त्वदुक्तं मांसरहितमित्यर्थः कल्पं विधिं मधुपर्कविधानमित्यर्थः मन्यन्ते स्मरन्ति। तत्रभवान् पूज्यः, त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवानपीति वैजयन्ती। जनकस्तु निवृत्तमांसः मांसभक्षणाद् विरतः, अतएव तस्मिन् विसृष्टा अनिवृत्तमांसे पुनर्वशिष्ठे प्रथमकल्पभूता वत्सतरी दत्तेति भावः।

(ढ) किं निमित्तं जनको निवृत्तमांस इत्यर्थः।

(ण) दैवं पूर्वजन्मार्जितं कर्म। पूर्वजन्मार्जितं कर्म तद्दैवमिति कथ्यते। तथा, प्राग्जन्मनि कृतं कर्म शुभं वा यदि वाऽशुभम्। दैवशब्देन निर्दिष्टमिह जन्मनि तद्बुधैरिति। पूर्वजन्म च वर्त्तमानकालस्य प्राक्काल इति बोध्यम्। शरीरस्य प्रतिक्षणध्वंसत्वात् प्राक्वर्त्ति शरीरस्य च परकालेऽनवस्थानात् कर्म च अपरकृतमपीति बोध्यम्। विपच्यत इति विपाकः, (भावे घञ्)। परिणामः फलमिति यावत् दैवस्य पूर्वकृतकर्मणो दुष्टं फलमिति दैवदुर्विपाकः। वैखानसः वानप्रस्थः विशेषेण खनति विदारयति धर्मार्थम् आत्मानं कृशयति इति वैखानसः। वि+खन+ड अन असु कर्म० स्वार्थे अण्। कतिपये संवत्सरा अतीता इति शेषः।

सौधा। तदो किंत्ति आअदो (७)।

भाण्डा। चिरन्तनप्रियसुहृदं प्राचेतसं द्रष्टुम्।

सौधा। अवि अज्ज सम्बन्धिणीहिं समं संवुत्तं से दंसणं ण वेत्ति (८)।

भाण्डा। सम्प्रत्येव भगवता वशिष्ठेन देव्याः कौशल्यायाः सकाशं भगवती अरुन्धती प्रहिता, यत् स्वयमुपेत्य वैदेहो द्रष्टव्य इति वक्तुम्।

सौधा। जधा एदे त्थविरा परप्परमिलिदा, तधा अम्हेवि वटुकेहिं समं मिलिअ अणज्झाअमहूसवं खेलन्ता सम्भावेम्ह। (त) [ इति परिक्रामतः। ]

भाण्डा। तदयं ब्रह्मवादी पुराणराजर्षिर्जनकः प्राचेतसवशिष्ठावुपास्य सम्प्रति आश्रमवहिर्वृक्षमूलमधितिष्ठति, य एषः। (थ)

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते।

---

(७) ततः किमिति आगतः।

(८) अपि अद्य सम्बन्धिनीभिः समं संवृत्तमस्य दर्शनं न वेति ?

(९) यथा एते स्थविराः परस्परमिलिताः, तथा वयमपि वटुकैः समं मिलित्वा अनध्यायमहोत्सवं सम्भावयामः।

---

(त) स्थविरा वृद्धाः। वटुकैः अल्पवयस्कैः ब्राह्मणैः। अनध्यायमहोत्सवं पाठविघ्नरूपमानन्दजनकव्यापारम्। सम्भावयामः सम्मानयामः।

(थ) ब्रह्मवादी वेदोपदेष्टा। प्राचेतसवशिष्ठौ उपास्य वाल्मीकिवशिष्ठौ आराध्य दर्शनसंलापादिकं कृत्वेत्यर्थः।

(२) हृदीति। हृदि अन्तःकरणे नित्यानुषक्तेन सततावस्थितेन सीता-

अन्तःप्रसृप्तदहनो ज्वलन्निव वनस्पतिः ॥ २ ॥

इति निष्क्रान्तौ । विष्कम्भकः ।

तत: प्रविशति जनकः ]

जन । अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन् मर्माणि क्रकच इव मन्युर्विरमति ॥ ३ ॥

कष्टम् एवं नाम जरसा दुःखेन च (द) दुरासदेन भूयः

---

शोकेन सीतावियोगदुःखेन, अन्तर्मध्ये प्रसृप्तः उद्वेलितः दहनो वह्निर्यस्य सः, तथाभूतो वनस्पतिः शमीवृक्ष इव तप्यते तापमनुभवति ।

(२) अपत्ये दुहितरि सीतायां तादृक् तथाविधं अतिशोकावहमित्यर्थः यद् दुरितं वननिर्वासनरूपं दुर्गतं दुर्गतिदुःखमेति यावत् । अभवत् । महता विपुलेन तीव्रेण उग्रेण व्यथयता दुःखयता तथा व्रणितं क्षतं हृदयं येन तेन तथोक्तेन तेन दुरितेन विषक्तः धृतः नवः नूतनः अतएव पटुः छेदनपटुः अतितीक्ष्णत्वात् छेदनकुशल इति यावत् धारावाही धारया कर्त्तनसाधनाग्रभागेन वहति पुनः पुनः निगमोद्गमाभ्यां सरतीति तथोक्तः मर्माणि अन्तःसन्धिस्थानानि निकृन्तन् छिन्दन् अतएव क्रकचः करपत्रमिव मे मम मन्युः शोकः चिरेणापि कालातिक्रमेणापि न विरमति । मन्युपक्षे धारया सातत्येन निरन्तरमित्यर्थः वहति सञ्चरतीति धारावाही निरन्तरस्थायी अनिवृत्त इति यावत् । सीतानिर्वासनं मामतिशयं व्यथयतीति भावः । शिखरिणीवृत्तम् ।

(द) दुरासदेन दुःसहेन । पराकः द्वादशाहोपवाससाध्यः प्रायश्चित्तरूपव्रतविशेषः । उक्तञ्च, यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् । व्रतं पराक इत्यादि । सान्तपनं सन्तापयतीति सान्तपनं सं + तप + णिच् ल्युट् स्वार्थे अण् । पञ्चगव्यकुशोदकपानेनैकदिनम् उपवासेन चैकदिनमिति द्वैदिवसिकव्रतभेदोऽयम् । तथोक्तम् । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सान्तपनं विदुरिति । तत्प्रभृतिभिस्तपोभिर्व्रतैर्भूयो बाहुल्येन यात्रा गृहीता विशोषिता इति यावत् रसधातवो मेदोमांसप्रभृतयो यस्य । यत्र

पराकसान्तपनप्रभृतिभिस्तपोभिरात्तरसधातुः अनुपयुज्यमानो न अद्यापि मे दग्धदेहः पतति, अन्धतामिस्रा हि असूर्य्या नाम ते लोकास्तेभ्यः प्रतिविधीयन्ते ये आत्मघातिन इत्येवमृषयो मन्यन्ते, अनेकसंवत्सरातिक्रमेऽपि च प्रतिक्षणपरिभावना-स्पष्टनिर्भासः प्रत्यग्र इव दारुणो न मे दुःखसंवेगः प्रशाम्यति। अयि मातर्देवयजनसम्भवे देवि सीते! ईदृशस्ते निर्माणभागः परिणतः, येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते। हा हा पुत्रि!

अनियतरुदितस्मितं विराजत्-
कतिपयकोमलदन्तकुड्मलाग्रम्।

---

शरीरान्तर्वर्त्ती द्रवभावो रसशब्दवाच्यस्तदन्यो धातुरिति बोद्धव्यम्। यद्वा रसा एव धातवः देहधातवः मेदोमांसास्थिस्नायुमज्जाप्रभृतयः यस्य। रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे इति मेदिनी। अनुपयुज्यमानः अन्नपानादिना असेव्यमानः अनाहारः। यद्वा न उपयुज्यते कार्य्येषु इति अनुपयुज्यमानः भग्नः इत्यर्थः। दग्धदेहः क्लेशकरदेहः। पतति विनाशं गच्छति। अन्धं अन्धकरणं तामिस्रं तमःसंहतिः प्रगाढ़ं तम इत्यर्थः यत्र अतिभीषणदुःखोत्पादका इत्यर्थः। नास्ति सूर्य्यः यत्र आलोकमात्र-रहिताः सुखगन्धरहिता इत्यर्थः अतिघोरनरकविशेषाः। ये आत्मघातिनो भवन्तीति शेषः तेभ्यः तेषां शास्त्यर्थमित्यर्थः प्रतिविधीयन्ते। अन्धं तमः प्रवि-शन्ति ये के चात्महनो जना इति श्रुतिनिर्दिष्टत्वादिति भावः। अन्यथा अहम् एतद्दुःखपरिहारार्थमात्मघाती भवेयमिति भावः। प्रतिक्षणं परिभावनया परिचिन्तया स्पष्टः परिस्फुटो निर्भासः प्रकाशः यस्य स तथोक्तः प्रतिक्षणं मनसि वर्त्तमान इत्यर्थः अतएव प्रत्यग्र इव चिन्तात्यागेन अलुप्तत्वात् नूतन इव प्रतीयमान इत्यर्थः दारुणः हृदयविदारणः दुःखसंवेगः शोकप्राबल्यम्। आक्रन्दितुं रोदितुम्।

(४) अनियतं विषयेण असम्बद्धं विषयसम्बन्धरहितम् अहेतुकमिति यावत् रुदितं रोदनं स्मितं स्वल्पहसितं यस्मिन् तत् तथोक्तं विराजन्ति विकासमानानि

वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जुजल्पितं ते ॥ ४ ॥

भगवति वसुन्धरे! सत्यमतिदृढासि। (ध)

त्वं वह्निर्मुनयो वशिष्ठगृहिणी गङ्गा च यस्या विदुः
माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः।
विद्यां वागिव यामसूत भवती, शुद्धिं गतायाः पुर-
स्तस्यास्त्वं दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः ॥५॥

[नेपथ्ये।] इत इतो भगवतीमहादेव्यौ।

जनकः। [दृष्ट्वा।] अये (न) गृष्टिनोपदिश्यमानमार्गौ

---

कतिपयानि शिशुत्वात् अल्पसंख्यकानि कोमलानि सुकुमाराणि (कपि) दन्तानि कुड्मलाग्राणि यस्मिन् तत्तथोक्तं कुड्मलसदृशकोमलविरलदन्तवदित्यर्थः तथा स्खलत् पतत् न सम्यक् परिस्फुटमित्यर्थः असमञ्जसं न कर्तृकर्मक्रियादिसूचकयथोचितविभक्त्यादिसमन्वितं मञ्जु ललितं सुस्वरत्वात् सुश्राव्यमिति यावत् जल्पितं भाषितं वचनं यस्मिन् तत्तथोक्तं शिशोः ते तव वदनं कमलमिव शिशुकालिकं कमलसदृशं ते वदनमित्यर्थः स्मरामि। अत्र रुदितहसित पदानुरोधात् मुखकमलमित्युपमितसमासः। रुदितहसितयोः मुख एव सम्भवात् मुखस्य प्राधान्यं तच्च उपमित समासेनैव भवतीति। पुष्पिताग्रावृत्तम्।

(ध) अतिदृढाऽसि अतिकठिनहृदयासीत्यर्थः। दृढत्वमेव ख्यापयति त्वमिति।

(५) त्वं, वह्निरग्निर्मुनयो वशिष्ठवाल्मीकिप्रभृतयः वशिष्ठगृहिणी अरुन्धती गङ्गा सुरधुनी च रघोः कुलगुरुः कुलोद्भवः देवः स्वयं भास्करः सूर्यो यदि वा सूर्यश्चेत्यर्थः यस्याः सीताया माहात्म्यं विदुः। भवती यां सीतां वाग्वाणी विद्यामिव तत्त्वविद्यामिव असूत वाक् यथा विद्याम् उद्गिरति तद्वत् त्वं निर्दोषां याम् उद्भावयामासेत्यर्थः, हे दारुणि! कठिनहृदये! शुद्धिं गताया निर्दोषायाः वह्नौ निर्दोषत्वेन ज्ञाताया अदुष्टायाः तस्या दुहितुः कन्याया अपि स्वतनयायाः सीतायास्तथा तेन प्रकारेण विशसनं अनाथवत् आत्मीयादिहीनवत् प्रतीकारचेष्टां विनैवेत्यर्थः विशसनं निर्वासनदण्डेन वने व्याघ्रादिभिर्विनाशं कथं केन प्रकारेण अमृष्यथाः सोढवती। सर्वथैवैतदसहनीयं प्राणिभिरिति भावः। शार्दूलविक्रीडितं वृत्तम्।

(न) गृष्टिना तदाख्येन कञ्चुकिना।

भगवती अरुन्धती । [ उत्थाय । ] क्वां पुनर्महादेवीत्याह । [ निरूप्य । ] हा कथं महाराजदशरथस्य धर्मपत्नी प्रियसखी मे कौशल्या, क एवं प्रत्येति सैवेयमिति ।

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन, सैषा ।
कष्टं बतान्यदिव दैववशेन जाता
दुःखात्मकं किमपि भूतमहो विपाकः ॥ ६ ॥

असमपरप्रायो दशाविपर्य्यासः ।

य एव मे जनः पूर्वमासीन्मूर्त्तो महोत्सवः ।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥ ७ ॥

---

( ६ ) इयं पूर्वनिर्दिष्टा अधुना अनभिज्ञातव्या इत्यर्थः कौशल्या दशरथस्य महाराजस्य गृहे श्रीर्यथा लक्ष्मीरिव आसीत् रामवनगमनदशरथमरणादेः प्राक् साक्षात् राजलक्ष्मीरिव तत्रातिष्ठदित्यर्थः । अथवा उपमानपदेन औपम्य-वाचकस्तथा शब्दप्रयोगेण किम् उपमानभूताया श्रिया अस्या अभेदत्वात् औपम्य-वाचकपदप्रयोगो निरर्थक इति भावः । अभेदत्वमेव कथयति सैवेति । सा लक्ष्मीरेव एषा । अहो बत कष्टं सैव लक्ष्मीः दैववशेन विधिवशेन दुःखात्मकं दुःखस्वभावम्, आत्मा देहे धृतौ जीवे स्वभावे परमात्मनीति विश्वः । नियत-दुःखोपजीविनम् अन्यत् अपरं मनुष्यातिरिक्तमित्यर्थः किमपि अज्ञाताश्रुतपूर्वं किञ्चित् भूतं जन्तु जाता । अहो विपाकः दशापरिणामः । अस्या एवम्भूतः परिणामः को मनसि अपि अचिन्तयदिति भावः । वसन्ततिलकं वृत्तम् ।

( ७ ) असमप्रायः बाहुल्येन असमः अन्यसदृश इति यावत् । अपरः प्राय इति पाठे अपरभावं गत इत्यर्थः । अपूर्वगत्यर्थे इन धातोरच् । अयं दशावि-पर्य्यायः अपरविधदुःखजनकत्वात् अपरविधो जात इत्यर्थः । अपरः पाप इति पाठे पापः क्लेशजनकः । अयं पुनरपरः पापो जात इत्यर्थः पापत्वमेव कथयति । य इति । य एव मे मदात्मीयो जनः पूर्वं मूर्त्तो दर्शनादिना अतिशयानन्दजनकत्वात् मूर्त्तिमान् महोत्सव इव आसीत् तस्य एव जनस्य दर्शनं क्षते शरीरस्य निकृत्तस्थाने स्फुटितव्रणादौ वा क्षारं लवणमेव अत्यन्त-दुःखजनकत्वात् असह्यं जातम् ।

ततः प्रविशति अरुन्धती कौशल्या कञ्चुकी च।

अरु। ननु ब्रवीमि द्रष्टव्यः स्वयमुपेत्य वैदेह इत्येष वः कुलगुरोरादेशः, अतएवाहं प्रेषिता, ततः कोऽयं पदे पदे महान् अध्यवसायः। (प)

कञ्चु। देवि! संस्तम्भयात्मानम्, (फ) अनुरुध्यस्व भगवतो वशिष्ठस्यादेशमिति विज्ञापयामि।

कौश। ईदिसे काले मिहिलाधिवो दट्ठव्वोत्ति समं ज्जेव सव्वाइं दुक्खाइं समुव्भवन्ति। ण सक्कणोमि उव्वत्तमाणमूलबन्धनं हिअअं अवत्थाविदुं (१०)। (ब)

अरु। अत्र कः सन्देहः।

---

(१०) ईदृशे काले मिथिलाधिपो द्रष्टव्य इति समम् एव सर्वाणि दुःखानि समुद्भवन्ति। न शक्नोमि उद्वर्त्तमानमूलबन्धनं हृदयमवस्थापयितुम्।

---

(प) महान् अध्यवसाय अस्मासु स्थितासु तत्कन्याया एवम्भूतेषु कथं तस्यायतो वर्त्तिष्ये इति वैदेहदर्शने निश्चयः दृढ़बुद्धिर्वा। यद्वा महान् अनध्यवसाय इति पाठे महान् अनध्यवसायः वैदेहदर्शने महती अनभिमतिः।

(फ) आत्मानं संस्तभ्य धैर्य्यावलम्बनेन आत्मानं स्थिरीकुरु अनुरुध्यस्व अनुसर आत्मानं निगृह्य वशिष्ठस्य आदेशं प्रतिपालय स्वयमुपेत्य वैदेहं पश्य तं सम्भावय चेत्यर्थः।

(ब) द्रष्टव्य इति चिन्त्यमानाया मे युगपदेव सर्वाणि दुःखानि उद्वेल्लन्ति। स्वजनस्य हि दुःखमयतो विहतद्वारमिवोपजायत इति भावः। उद्वर्त्तमानमूलबन्धनम् उद्वर्त्तमानम् उत्पाटितं मूलबन्धनं प्रधानबन्धनं यस्य तत् तथोक्तम्। दुःसहदुःखभटिकासंवेगाच्छिन्नबन्धनं मे हृदयं न अवस्थापयितुं व्यवस्थापयितुं यथापूर्वं संस्थापयितुमित्यर्थः न शक्नोमि समर्थाऽस्मि। उद्वहमानेति पाठे उद्वहते उद्वेल्लतीति उद्वहमानः उद्वेल्लत् वेगादुच्चलित इत्यर्थः।

सन्तानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि।
दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते ॥ ८ ॥

कौश। कहं वच्छाए बहूए एवं गदे तस्स राएसिणो मुहं दंसेम्ह (११)।

अरु। एष वः श्लाघ्यसम्बन्धी जनकानां कुलोद्वहः।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ ९ ॥

कौश। एसो सो महाराअस्स हिअआणन्दो वच्छाए

---

(११) कथं वत्साया बध्वा एवं गते तस्य राजर्षेः मुखं दर्शयामः।

---

(८) सन्तानेन धारावदविच्छेदेन वहन्ति प्रवर्त्तन्ते इति सन्तानवाहीनि धारावाहीनि अविरतप्रवहमानानीति यावत् सतः आदृतस्य प्रियस्येति यावत्, सदसती आदरानादरयोरिति पाणिनिः। सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सन् इति चामरः। बन्धोरात्मीयजनस्य, बध्नाति मनः स्नेहादिनेति बन्ध्-धातोरुप्रत्ययेन सिद्धः। पुत्रबध्वादेर्वियोगात् विच्छेदात् जायन्ते इति तथोक्तानि प्रियजनविप्रयोगजन्मानि दुःखानि प्रेयसि जने आत्मीये जने दृष्टे सति स्रोतः-सहस्रैरिव सहस्रधाराभिरिव उपलक्षितानि अतएव दुःसहानि असह्यानि सन्ति संप्लवन्ते सीमानमतिक्रम्य ऊर्द्धं चलन्ति हृदयमाच्छाद्य शोकस्य प्रादुर्भावो भवतीति भावः। स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते इत्यस्य समा कालिदासस्य कुमारसम्भवे उक्तिः। इन्द्रवज्रावृत्तम्।

(९) एषः पुरोवर्त्ती वो युष्माकं श्लाघ्यः सम्बन्धी अतिप्रशस्यः बन्धुः जनकानां जनकवंशीयानाम् उद्वहतीति उद्वहः कुलस्य .उद्वहः कुलोद्वहः कुलश्रेष्ठः वर्त्तते इति शेषः। उत् ऊर्द्धं वहति वर्त्तते इति व्युत्पत्त्या उद्वहस्य श्रेष्ठार्थत्वम्। यस्मै अस्मै याज्ञवल्क्यो नाम प्रसिद्धो मुनिः ब्रह्म ईश्वर एव परम् अयनं प्रतिपाद्यं तदेव पारायणं, स्वार्थे ष्णः यस्य शास्त्रस्य। वेदमित्यर्थः जगौ कथयामास उपदिदेशेति यावत्। यद्वा ब्रह्म वेदम् इति द्वितीयान्तं पदम्। पारे अयनं गमनं यस्मिन् कर्मणि तद् यथा तथा समाप्तिपर्य्यन्तमित्यर्थः जगौ। अथवा पारं समाप्तिं अयते अनेनेति पारायणं समस्तांशं ब्रह्मणो वेदस्य पारायणं सकलं वेदमित्यर्थः।

बह्हए पिदा राएसी, हद्दी हद्दी सम्भाविदम्हि अणुवट्ठिदमङ्ग-सवे दिअहे। हा देव्व, सव्वं एव्व तं णत्थि (१२) (भ)।

जनकः। [उपसृत्य।] भगवति अरुन्धति ! वैदेहः सीर-ध्वजोऽभिवादयते।

यया पूतम्मन्यो विधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः।
त्रिलोकीमङ्गल्यामवनितललोलेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् ॥ १० ॥

---

(१२) एषः स महाराजस्य हृदयानन्दी वत्साया बध्वाः पिता राजर्षिः हा धिक् हा धिक् सम्भाविता अस्मि अनुपस्थितमहोत्सवे दिवसे, हा दैव ! सर्वमेव तन्नास्ति।

---

(भ) हा धिक् हा धिक् सम्भाविताऽस्मि अनुपस्थितमहोत्सवे दिवसे। सीतायाः पुत्रप्रसवात् परमुपस्थितमहोत्सवे दिवसे अनेनाहम् आगमनादिना सम्भाविता भविष्यामीति विपुलाशया वर्द्धिताहं सम्प्रति शोकजननकव्यापारात् परं दुःखमये दिवसे कर्त्तव्यत्वात् सम्भाविता दर्शनादिना वर्द्धिता जनितगौर-वास्मि। हा दैव, सर्वमेव तन्नास्ति आह्लादकरं सर्वमेव मे अपास्तं, न स महाराजो वर्त्तते न च मे बधूः सम्भावितपुत्री सीता न च तत्प्रसवः। रामा-दिरपि शोकसंभिन्नहृदयः अहञ्च एतादृशीमवस्थां गता, तत् कुतो मे सम्भावनं कुतो मे सान्त्वनेति भावः।

(१०) पूर्वेषां प्राचीनानां गुरूणां पूज्यानां गुरुतमः पूज्यतमः ते तव पतिर्वशिष्ठः पवित्रस्य विशुद्धस्य महसो तेजसः निधीयतेऽस्मिन्निति निधिराधारो-ऽपि अतिशयपवित्रोऽपीत्यर्थः यया भवत्या आत्मानं पूतं पवित्रं मन्यते त्रयाणां लोकानां समाहारः त्रिलोकी तस्याः मङ्गल्यां मङ्गलकारिणीं जगद्वन्द्यां त्रिभु-वनपूज्यां तां भगवतीं भवतीम् उषसं प्रातःसन्ध्यादेवीमिव अवनितललोलेन भूमौ नतेन शिरसा वन्दे प्रणमामि। शिखरिणी वृत्तम्।

अरु। परं ज्योतिस्ते प्रकाशताम्, अयं स त्वां पुनातु देवः परोरजा य एष तपति (म)।

जन। आर्य्ये गृष्टे! अपि कुशलमस्याः प्रजापाल-मातुः (य)।

कञ्चु। [स्वगतम्।] निर्विशेषमतिनिष्ठुरमुपालब्धाः स्मः। [प्रकाशम्।] राजर्षे! अनेनैव मन्युना चिरपरित्यक्तराम-भद्रमुखचन्द्रदर्शनां नार्हसि त्वं दुःखयितुमतिदुःखितां देवीम्। रामभद्रस्यापि दैवदुर्नियोगः कोऽपि, यत् किल समन्तात् प्रवृत्तबीभत्सकिंवदन्तीकाः पौरजानपदा नाग्निपरिशुद्धिमप्य-ल्पकाः प्रतियन्ति इत्यतो दारुणमनुष्ठितम् (र)।

जन। आः! कोऽयमग्निर्नाम अस्मत्प्रसूतिपरिशोधने,

---

(म) परं परमं ज्योतिः ब्रह्मरूपं तेजः परं ब्रह्मज्योतिरित्यर्थः ते तव प्रकाश-ताम् आविर्भवतु परं ब्रह्म ते ज्ञानविषयीभवतु इत्यर्थः। अयं देवः सूर्य्य इत्यर्थः त्वां पुनातु पवित्रीकरोतु। रजसः रजोगुणात् परः परवर्त्तीति परोरजाः रजसा अस्पृष्टः सन्नित्यर्थः य एष तमोनाशक इत्यर्थः तपति तापनेन जगत् पवित्रीकरोति। अपूतस्य ब्रह्मज्ञानासम्भवादिति भावः।

(य) प्रजापालस्य प्रजार्थं निर्दोषां सीतां त्यक्तवत इति प्रजावत्सलस्य राज्ञो रामस्य मातुर्जनन्या मत्सम्बन्धरहिताया अनिष्टकारणस्य कारणीभूताया इत्यर्थः कौशल्यायाः कुशलं मङ्गलम्। अपि मत्सुतां निर्वास्य प्रजां पालयतः सुखिनो रामस्य मातुः कुशलमित्यभिप्रायः।

(र) अतिनिष्ठुरम् अतिकठिनाचरम्। उपालब्धाः तिरस्कृताः। अने-नैव मन्युना क्रोधेन चिरं परित्यक्तं रामभद्रस्य मुखदर्शनं यया तां तथोक्ताम्। समन्तात् सर्वतः प्रवृत्ता जाता बीभत्सा अतिजुगुप्सिता किंवदन्ती निन्दा येभ्यस्ते तथोक्ताः। अल्पकाः नीचाशयाः। प्रतियन्ति विश्वसन्ति। दारुणं मर्मभेदकं कर्म।

(ल) आः इति अमर्षसूचकमव्ययम्। कोऽयं न शक्तिमानित्यर्थः पावक-तापत्वे अस्मत्प्रसूतिसमीपे सोऽतिलघुरिति भावः। रामपरिभूताः रामेण

कष्टमेवंवादिना जनेन रामपरिभूता अपि वयं पुनः परिभूयामहे (ल)।

अरु। [निःश्वस्य।] एवमेतत्, अग्निरिति वत्सां प्रति परिलघूनि अक्षराणि, सीतेत्येव पर्य्याप्तम्। हा वत्से! (व)।

शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढ़यति।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतो
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः॥ ११॥

---

अवमानिताः। सीतायास्त्यागात् विशेषतस्तु सापवादत्यागादत्यन्तमवमानिता वयं रामेण सम्प्रति प्रसूतिपरिशोधनरूपमेवम् असहं वाक्यं वदता जनेन पुनरपि परिभूयामहे परिभूताः स्म।

(व) वत्सां प्रति वत्सायाः सीतायाः सम्बन्धे तया सह तुलनयेति यावत् अग्निरिति नाम परिलघूनि अतिक्षुद्राणि अक्षराणि भावाभिव्यञ्जकवर्णानि। अग्निरिति वर्णमात्रोच्चारणान्येव भवन्ति न तु अर्थप्रकाशकानि भवन्ति महातेजसः समीपे अल्पतेजस इव तत्र अग्निर्तेजो न स्फुरति अतः परिशुद्धिविषये सीतासमीपे अग्निरिति नामापि न कर्त्तव्यं सीतायास्तस्य हीनत्वादिति भावः। सीतेत्येव पर्य्याप्तं सीतेति वर्णोच्चारणेनैव पर्य्याप्तं यथेष्टं शुद्धिविषये इति शेषः। सीता इति वर्णमात्राणामुच्चारणेनैव सर्वं पवित्रं स्यात् का तस्याः सामान्यपावनान्तरेण शुद्धिरिति भावः।

(११) त्वं शिशुर्वा शिष्या वा मम सम्बन्धे यत् असि भवसि तत् तव शिशुत्वं शिष्यत्वं वा तथा तिष्ठतु नाहं तदनुरोधेन कर्त्तव्यं परित्यजामीति भावः। त्वयि विशुद्धेः पवित्रताया उत्कर्षः आतिशय्यं तु मम भक्तिं पूज्येष्वनुरागो भक्तिस्तां द्रढ़यति दृढ़ीकरोति पुण्यातिशयात् त्वां पूजनीयां मन्ये पूजार्थं मे प्रवृत्तिश्च भवतीति भावः। कथं शिशौ शिष्यायां वा पूजाप्रवृत्तिः कथं वा सा विधीयत इत्यत आह शिशुत्वमिति। शिशुत्वं बालिकात्वं वा भवतु स्त्रैणं स्त्रीत्वं वा भवतु ननु निश्चितं त्वमिति शेषः जगतो वन्द्या पूजनीया असि। गुणाः पूजास्थानं पूजास्पदं पूज्या इत्यर्थः भवन्ति गुणिषु यल्लिङ्गं स्त्रीत्वपुंस्त्वादिबोधकं न च तत् पूज्यं न च वयः अल्पवर्षमधिकवर्षं वा पूज्यं भवति। गुणवत्त्वमेव पूजायां प्रवर्त्तकमिति भावः। शिखरिणीवृत्तम्।

कौश। अम्मो उम्मीलन्ति वेअणाओ (१३)। [ इति मूर्च्छति। ]

जन। हा कष्टं ! किमेतत्।

अरु। राजर्षे ! किमन्यत्।

स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसाः,
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम्।
विपाके घोरेऽस्मिन्नथ खलु विमूढ़ा तव सखी
पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥ १२ ॥

जन। कष्टं, सर्वथा नृशंसोऽस्मि, यश्चिरस्य दृष्टान् प्रियसुहृदः प्रियान् दारान् न स्निग्धं पश्यामि (ञ)।

स सम्बन्धी श्लाघ्यः, प्रियसुहृदसौ, तच्च हृदयम्,
स चानन्दः साक्षादपि च निखिलं जीवितफलम्।

---

(१३) अहो उन्मीलन्ति वेदनाः। उन्मीलन्ति उद्दीपिता भवन्ति।

---

(१२) सुहृदि मित्रे त्वयि दृष्टे सति सः राजा दशरथः, तत् सौख्यं युवयोः तत् बन्धुत्वं प्रीतिः, स च शिशुजनः सीतारूपः बालिकाभूता सीतेत्यर्थः, ते च दिवसाः सुखसुभगाः काला इत्यर्थः, तदखिलं समस्तं तत् स्मृतौ अस्या इति शेषः आविर्भूतं प्रकाशमानम् आसीदिति शेषः। अथ अनन्तरं पूर्ववृत्तान्तसंस्मरणानन्तरमित्यर्थः पुनः घोरे अस्मिन् विपाके सीताया गुणचयवर्णनाश्रवणाज्जाते दशाविपर्य्यासे तव सखी सुहृत् कौशल्या विमूढ़ा हतचेतना जातेति शेषः। हि तथाहि, पुरन्ध्रीणां कुलस्त्रीणां चित्तं चेतः कुसुमवत् सुकुमारमतिकोमलम्। शिखरिणी वृत्तम्।

(ञ) प्रियबन्धोः। प्रियान् दारान् प्रियां स्त्रियं स्निग्धं सस्नेहं क्रियाविशेषणमेतत्।

(१३) स दशरथः श्लाघ्यः प्रियः सम्बन्धी, असौ दशरथः प्रियसुहृत् प्रियसखा, तत् दशरथस्य इत्यर्थः। विधेयप्राधान्यविवक्षया क्लीवत्वम्। हृदयं

शरीरं, जीवो वा, यदधिकमतो वा प्रियतमो
महाराजः श्रीमान् किमिव मम नासीद्दशरथः ॥ १३ ॥

कष्टम् इयमेव सा कौशल्या।

यदस्याः पत्युर्वा रहसि परमं दूषितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत् स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥ १४ ॥

अरु। हा कष्टम्! अतिचिरनिरुद्धनिःश्वासनिष्ठुरं हृदय-मस्याः (ष)।

---

मम द्वितीयमनुभवस्थानमित्यर्थः, स दशरथः साक्षात् प्रत्यक्षभूतः मूर्त्तिमानिति यावत् आनन्दः मम निरतिशयहर्षहेतुरित्यर्थः, अपि च निखिलं सम्पूर्णं जीवितफलं जीवनस्य वाञ्छितम् अखण्डं फलमित्यर्थः मम जीवने महता पुण्यसञ्चयेन यत् फलं परमभीप्सितम् आसीत् दशरथरूपबन्धुलाभेन तत्समग्रं प्राप्तमिति भावः। जीवितपदमिति पाठे जीवितपदं जीवनास्पदं तस्मिन्नेव आधारभूते मे जीवनमासीदिति भावः। शरीरं देहः जीवः जीवनं वा अथवा अतः आभ्यां यदधिकम् अत्यन्तं प्रियतमः स मे तदा आसीदित्यर्थः अत इत्यूह्यं श्रीमान् महाराजो दशरथः मम किमिव नासीत्। सर्वमेवासीदित्यर्थः। इव वाक्यालङ्कारे, एवार्थे वा प्रयुक्तः। शिखरिणीवृत्तम्।

(१४) अस्याः कौशल्यायाः वा अथवा पत्युर्दशरथस्य रहसि निर्जने अनन्यजनविदितमित्यर्थः यत् परमं प्रधानं दूषितं दोषो प्रणयकलह इति यावत् अभूत् तत्र कलहेऽहं दम्पत्योः जाया च पतिश्च तौ दम्पती, जायाशब्दस्य दमादेशः। तयोर्जायापत्योः पृथक् जायायाः पत्युर्वा एकैकस्य उपालम्भस्य तिरस्कारस्य जायायाः पत्युर्वा दोषकथनस्येति यावत् विषयः पात्रम् अभूवम्। तदनु तदनन्तरं तयोः कथितदोषश्रवणानन्तरमित्यर्थः परस्परस्य प्रसादे कोपे वा मदधीनः मदायत्तः मदिच्छानिरूपित इत्यर्थः विधिर्व्यवस्था अभूत्। वा अथवा तत् स्मृत्वा अलं तत्स्मरणं निरर्थकमित्यर्थः हृदयम् अवस्कन्द्य आक्रम्य दहति सन्तापयति। शिखरिणीवृत्तम्।

(ष) अतिचिरम् अतिदीर्घकालं निरुद्धो यो निःश्वासः तस्मात् चिरनिःश्वासनिरोधादित्यर्थः निष्ठुरं स्थिरं निश्चलम् अस्याः हृदयम्।

जन। हा प्रियसखि! [ इति कमुण्डलूदकेन सिञ्चति। ]

कञ्चु। सुहृदिव प्रकटय्य सुखप्रदः
प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम् ॥ १५ ॥

कौश। [ संज्ञां लब्ध्वा। ] हा वच्छे जाणइ! कहिं सि, सुमरामि दे विआहलच्छीपरिग्गहेक्कमण्डणं पप्फुरन्तसुद्धहसिदमुद्धमुहपुण्डरीअं, आप्फुरन्तकोमुदचन्दचन्दिआसुन्देरेहिं अङ्गेहिं उल्लासेहि, जादे! पुणोवि उज्जोएहि उच्छङ्गं, सव्वदा महाराओ भणादि, एसा रहुउलमहत्तराणं वहू, अम्हाणं उण जणअसम्बन्धेण दुहिदिआ एव्व ( १४ ) ( स )।

---

( १४ ) हा वत्से जानकि! क्वासि, स्मरामि ते विवाहलक्ष्मीपरिग्रहैकमण्डनं प्रस्फुरच्छुद्धहसितमुग्धमुखपुण्डरीकम्, आस्फुरत्कौमुदचन्द्रचन्द्रिकासुन्दरैरङ्गैरुल्लासय, जाते! पुनरप्युद्द्योतयोत्सङ्गं, सर्वदा महाराजो भणति, एषा रघुकुलमहत्तराणां वधूः, अस्माकं पुनर्जनकसम्बन्धेन दुहिता एव।

---

( १५ ) विधिर्विधाता दैवं वा प्रथमं पूर्वं सुहृदिव मित्रमिव एकः अद्वितीयः रसः अनुरागो यत्र तादृशाम् अनुकूलतां प्रकटय्य दर्शयित्वा सकलसुखसौभाग्यं दत्त्वेत्यर्थः सुखप्रदः सन् पुनस्तत्परम् अहो आश्चर्यम् अकाण्डजनितेन विवर्त्तनेन रूपान्तरपरिणामेन अकस्मात् रूपान्तरपरिग्रहेणेत्यर्थः दारुणः मर्मभेदी सन् मनोरुजं मनःपीड़ां विशिनष्टि विशेषेण जनयति। रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोरिति मेदिनी। द्रुतविलम्बितं वृत्तम्।

( स ) क्वासि अस्मान् विहाय कुत्र गतासि। विवाहलक्ष्म्याः परिणयसंस्कारजनितरमणीयतायाः परिग्रहो धारणम् एव एकमद्वितीयं मण्डनं भूषणं यस्य तत्, प्रस्फुरता विलसता शुद्धेन निर्मलेन हसितेन मुग्धं मनोहरं यत् मुखपुण्डरीकं मुखकमलम्। आ सम्यक् स्फुरन् विलसन् यः कौमुदस्य कार्तिक-

कञ्चु। यथाह देवी।

पञ्चप्रसूतेरपि राज्ञ आसीत् प्रियो विशेषेण सुबाहुशत्रुः।
वधूचतुष्केऽपि यथैव शान्ता प्रिया तनूजास्य तथैव सीता ॥१६॥

जन। हा प्रियसख महाराज दशरथ! एवमसि सर्वप्रकारहृदयङ्गमः कथं विस्मर्य्यसे।

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
सम्बन्धे विपरीतमेव तदभूदाराधनं ते मयि।
त्वं कालेन तथाविधोऽप्यपहृतः सम्बन्धबीजन्तु तद्
घोरेऽस्मिन् मम जीवलोकनरके पापस्य धिग्जीवितम् ॥१७॥

---

मासस्य शरत्कालस्येत्यर्थः चन्द्रमसस्य या चन्द्रिका ज्योत्स्ना तद्वत् सुन्दरैः मनोहरैः। उल्लासय आनन्दय। जाते वत्से। उद्द्योतय अलङ्कुरु। उत्सङ्गम् अङ्कम् उपविश्य अद्य शोभां जनयेत्यर्थः। जनकसम्बन्धेन दुहिता एव, सीता वधूरप्यस्माकं मित्रस्य जनकस्य दुहितृत्वेन अस्माकमपि दुहिता इत्यर्थः।

(१६) सुबाहोः सुबाहुनामकरावणानुचरराक्षसविशेषस्य शत्रुः हन्ता रामः पञ्च प्रसूतयोऽपत्यानि यस्य तस्य तथोक्तस्य अपि रामादिषु चतुर्षु पुत्रेषु शान्तायां नाम कन्यायामिति पञ्चसु अपत्येषु अपीत्यर्थः राज्ञः दशरथस्य विशेषेण प्रिय आसीत्। तथा वधूचतुष्केऽपि वधूचतुष्टयेऽपि तनूजा शान्ता यथैव अस्य प्रिया प्रीतिभाजनं सीता तथैव प्रिया आसीदिति शेषः। उपजातिः वृत्तम्।

(१७) किलेति प्रसिद्धौ। कन्यायाः पितरः जामातुराप्तम् आत्मीयं जनं पूजयन्ति किल इति प्रसिद्धम् इत्यर्थः। ते तव सम्बन्धे मयि तत् आराधनं विपरीतमेव। त्वं जामातुः पितापि कन्यायाः पितरं मां चिरसख्यसम्बन्धेनाराधयतिस्म इति तद् विपरीतम् आसीदित्यर्थः। तथाविधः तादृशसम्बन्धवान् सत्पुरुषत्वम् अपि निन्दायां कालेन अपहृतः अस्माल्लोकान्नीतः मृत इत्यर्थः। एतादृशोऽपि लोकः कालेन अपह्रियते इति कालेन महदनुचितमनुष्ठितमिति भावः। गर्हा समुच्चय प्रश्न शङ्का सम्भावनास्वपीत्यमरः। न केवलं कालेन स सम्बन्धी अपहृतः तु किन्तु तत्सम्बन्धि अस्य वैवाहिकबन्धनस्य बीजं सीतारूपञ्च अपहृतम्। अतएव घोरे सम्प्रति दारुणे अस्मिन् जीवलोकनरके घोरनरकरूपे परिणते अस्मिन् जीवलोके इत्यर्थः पापस्य शोकमलिनस्य मम जीवितं

कौश। जादे जाणइ! किं करेमि, दढ़वज्जलेवघड़िअबन्धणिच्चलं ज्जेव हदजीविदं मं मन्दभाइणीं ण परिच्चअइ (१५) (छ)।

अरु। आश्वसिहि राजपुत्रि! वाष्पविश्रामोऽप्यन्तराले कर्त्तव्य एव, अन्यच्च किं न स्मरसि, यदवोचदृष्यशृङ्गाश्रमे युष्माकं कुलगुरुस्तदुपजातमेव, किन्तु कल्याणोदर्कं भविष्यति (च)।

कौश। भअवदि! अदिक्कन्तो मणोरहो (१६) (क)।

---

(१५) जाते जानकि! किं करोमि, दृढ़वज्रलेपघटितबन्धनिश्चलमेव हतजीवितं मां मन्दभागिनीं न परित्यजति।

(१६) भगवति! अतिक्रान्तो मनोरथः।

---

जीवनधारणं धिक्। धिक् समयेत्यादिना द्वितीया। मम जीवनं केवलं दुःखायेति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

(छ) दृढ़ो यो वज्रकृतलेपः तेन घटितः कृतो यो बन्धः वहिर्गमद्वाररोधः तस्मात् निश्चलं तेन निश्चलं वा स्थिरमेव न निर्भिद्य वहिर्गन्तुं शक्तमिति यावत्, अन्यथा वहिरगमिष्यदिति भावः हतं शोकदग्धत्वात् हतप्रायं जीवितं जीवनं मन्दभागिनीं दुःसहदुःखभाजं पापकारित्वाद्दुःसहदुःखभोगार्थमेव जीवितामित्यर्थः मां न परित्यजति न परिहाय गच्छतीत्यर्थः।

(च) अन्तराले अवकाशे अविश्रान्तवाष्पविसर्जनं न कर्त्तव्यमिति भावः। अपरञ्च न त्वया एवं भग्नाशया भवितव्यं यतः कल्याणोदर्कमिदमशुभमित्याह अन्यदिति। तत् कुलगुरुकथितविषयम् उपजातं समीपवर्त्ति शीघ्रभावीत्यर्थः। किन्तु कल्याणं मङ्गलम् उदर्कः चरमफलम्, उदर्कः फलमुत्तरमित्यमरः। यस्य तत्तथोक्तं भविष्यति। अतः एतदशुभं शुभपरिणाममिति च ज्ञात्वा नैतादृगविरतवाष्पवारिविसर्गः कर्त्तव्य इति भावः।

(क) मनोरथः पुनः सीतासमागमाशा अतिक्रान्तः अतीतः दूरं गतः। तथाविधा आशा सुचिरं मनसो गता हिंस्रश्वापदसङ्कुले वने विसर्जनाद् बहुकालानन्तरं सम्प्रति सीतायाः पुनर्दर्शनं नितरामसम्भवमिति भावः।

अरु। तत् किं मन्यसे राजपुत्रि! मृषोद्यं तदिति, नहीदं सुचरित्रे अन्यथा मन्तव्यं, भवितव्यमेव तेन (ख)।

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयो भूत्।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतां व्याहरन्ति ॥ १८ ॥

नेपथ्ये कलकलः।

सर्वे आकर्णयन्ति।

जन। अद्य खलु शिष्टानध्याय इत्युद्धतं खेलतां वटूनां कलकलः (ग)।

---

(ख) मृषोद्यं मिथ्याकथनम्। वशिष्ठेन यदुक्तं तत् किं मिथ्या मन्यसे इति भावः। (मृषा + वद + क्यप्) सुचरित्रे ब्राह्मणेषु भक्तिमति चरित्रे इत्यर्थः। अन्यथामनने ब्राह्मणापमानं स्यात्तेन च पापं स्यादतो नान्यथा मन्तव्यं त्वया सुचरित्रयेति भावः।

(१८) आविर्भूतं गोचरीभूतं ज्योतिर्ब्रह्ममयं तेजः येषां तेषां तथोक्तानां साक्षात्कृतब्रह्मणामित्यर्थः ब्राह्मणानां वशिष्ठादीनां महर्षीणां ये व्याहाराः वचनानि तेषु संशयः सन्देहो मा भूत् तेषु सन्देहं मा कार्षीरित्यर्थः। कुत इत्याह, एषां हि ब्राह्मणानां वाचि वाक्ये भन्दयतीति (भन्द् + र) भद्रा उत्तमा अव्यर्था इति यावत् लक्ष्मीः सम्पत्तिः सिद्धिरिति यावत् निषक्ता संलग्ना एते ब्राह्मणा विप्लुतां अर्थादपेतां निरर्थकां असत्यामित्यर्थः वाचं न व्याहरन्ति न उद्गिरन्ति। (वि + प्लु गतौ + क्त) एषां वाक् सर्वदैव सफला भवति न कदाचिन्निष्फला भवतीति विश्वासः कर्त्तव्य एवेत्यर्थः। शालिनीवृत्तम्।

(ग) शिष्टः समुदाचारसूचकः अनध्यायः पाठपरिहारः। वशिष्ठादीनां महर्षीणां समागमात् तान् प्रति उपचारसूचकोऽयमवकाश इत्यर्थः। तथाहि मनुः, अनध्यायो रुद्यमाने समवाये जनस्य चेति। उद्धतम् उद्दामम् अत्युग्रं अवधीरितप्रतिबन्धमिति यावत्।

कौश। सुलहसोक्खं दाव बालत्तणं होदि (१७) (घ)।

[निरूप्य] अम्हहे! एदाणं मज्झे को एसो रामभद्दल- च्छीपरिसोहिदेहिं सावट्टम्भमुद्धललिदेहिं अङ्गेहिं अम्हाणं वि लोअणाइं सीदलावेदि (१७) (ङ)।

अरु। [अपवार्य्य सहर्षोत्कण्ठं स्वगतम्।] इदं नाम तद्भागीरथीनिवेदितरहस्यं कर्णामृतं, नत्वेवं विद्मः कतरो- ऽयमायुष्मतोः कुशलवयोरिति (च)।

जन। कुवलयदलश्यामस्निग्धः शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्रीकः श्रियेव सभाजयन्।
पुनरपि शिशुर्भूतो वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥१९॥

---

(१७) सुलभसौख्यं तावद् बालत्वं भवति।

(१७) अहो! एतेषां मध्ये क एष रामभद्रलक्ष्मीपरिशोभितैः सावष्टम्भ- मुग्धललितैरङ्गैरस्माकमपि लोचनानि शीतलयति।

---

(घ) सुलभम् अनायासलभ्यं सौख्यं सुखभोगो यस्मिन् तत्तथोक्तम्।

(ङ) रामभद्रस्य या लक्ष्मीः श्रीः रामसदृशसौन्दर्य्यादिरित्यर्थः तया परि- शोभितः। सावष्टम्भैः ससौष्ठवैः सुघटितैरित्यर्थः अतएव मुग्धैः सुन्दरैः ललितैः मनोहरैः शीतलयति तर्पयति।

(च) भागीरथ्या गङ्गया निवेदितं विज्ञापितं कथितमिति यावत् रहस्यं गोप्यं परिचयादिकं यस्य तत्तथोक्तं कर्णयोरमृतम् अमृतमिव सुखप्रदम्। भागीरथ्या मुखाद् यस्य वृत्तान्तं श्रुत्वा मम कर्णयोः परितृप्तिरासीदित्यर्थः तस्य दारकद्वयस्य एक इति भावः।

(१९) कुवलयदलवत् नीलोत्पलदलवत् स्निग्धः मसृणकोमलः श्यामश्च कृष्णवर्णश्च, शिखण्डकः काकपक्षः मण्डनं शोभाजनकं यस्य स तथोक्तः, पुण्या पवित्रा दोषशून्येत्यर्थः श्रीः शरीरशोभा यस्य स तथोक्तः, श्रिया रूपेण वटूनां शिशूनां परिषदं मण्डलं चतुर्दिग्वर्त्तिबालकसमूहमित्यर्थः सभाजयन् अवस्थानेन

कञ्चु। नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये।

जन। एवमेव। तथाहि,

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठिकम्
पाणौ कार्मुकमक्षसूत्रवलयं दण्डं तथा पैप्पलम्॥ २०॥

भगवति अरुन्धति! किमुत्प्रेक्षसे कुतस्त्योऽयमिति।

अरु। अद्यैव वयमप्यागताः।

जन। आर्य्य गृष्टे! अतीव मे कौतुकं वर्त्तते। तद्भग-

---

सगौरवं कुर्वन्निव अलङ्कुर्वन्निवेत्यर्थः कोऽयं शिशुरित्यर्थः, पुनः भूयः शिशुर्भूतः स बाल्यदृष्टः मे वत्सः रघुनन्दन इव दृष्टः सन् झटिति अञ्जसा दृशोर्नयनयोरमृताञ्जनम् अमृताञ्जनकार्य्यं सुधामयकज्जललेपवत् नयनयोः सुखं जनयतीत्यर्थः। आकृतिसादृश्यात् बाल्यस्थितरामवत् कोऽयं मे दर्शनसुखमुत्पादयतीति भावः। हरिणीवृत्तम्।

(२०) पृष्ठतः पृष्ठदेशे अभितः उभययोः पार्श्वयोश्चूडाभिः चूलाभिः केशैरित्यर्थः चुम्बितानि स्पृष्टानि कङ्कस्य तन्नामपक्षिविशेषस्य पत्राणि बाणमूलसंयोजिताः पक्षा यस्य तत्तथोक्तं तूणीद्वयं बाणाधारयुगलं, तथा भस्मनां स्तोकम् अल्पपरिमाणं प्रलेपभूतं परिमितं भस्मेत्यर्थः पवित्रं शुद्धिकारकं लाञ्छनं चिह्नं यस्य तत्तथोक्तं भस्मलिप्तमित्यर्थः उरः वक्षः, तथा रुरुर्मृगविशेषस्तत्सम्बन्धिनीं त्वचं, तथा मूर्वा तृणविशेषस्तत्तन्तुनिर्मितया मेखलया कटिसूत्रेण नियन्त्रितं बद्धं मञ्जिष्ठा लताविशेषस्तद्रागेण रक्तवर्णम् अधोवासः परिधानं च तथा पाणौ हस्ते कार्मुकं धनुः अक्षसूत्रवलयं वलयीकृतम् अक्षसूत्रं रुद्राक्षमालां तथा पिप्पलः अश्वत्थः तत्काष्ठनिर्मितं दण्डं यष्टिं धत्ते धारयति। क्षत्रियब्रह्मचारिणाम् अश्वत्थदण्डस्य विधानात्। तथाहि गौतमः,— वैल्वपालाशौ ब्राह्मणस्य दण्डौ अश्वत्थपैलवौ शेषे। तथा मनुरपि, ब्राह्मणो वैल्वपालाशौ क्षत्रियो वटखादिरौ, इत्यादि। शार्दूलविक्रीडितं वृत्तम्।

वन्तं वाल्मीकिमेव गत्वा पृच्छ, इमञ्च बालकं ब्रूहि, केऽप्येते प्रवयसस्त्वां दिदृक्षव इति ( क्ष )।

कञ्चु। यदाज्ञापयसि। [ इति निष्क्रान्तः। ]

कौश। किं भणध, एवं भणिदो आगमिस्सदित्ति (१८)।

अरु। भिद्येत किं सद्वृत्तमीदृशस्य निर्माणस्य ? ( ज )।

कौश। [ निरूप्य। ] कहं सविणअं णिसामिदगिट्ठिवअणो विसज्जिदइसिदारओ इदो अहिमुहं पसरिदो ज्जेव सो वच्छो (१९) ( झ )।

जन। [ चिरं निर्वर्ण्य। ] भोः किमप्येतत्।

महिम्नामेतस्मिन् विनयशिशुतामौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः।

---

(१८) किं भणथ, एवं भणित आगमिष्यतीति।

(१९) कथं सविनयं निशामितगृष्टिवचनो विसर्जितर्षिदारकः इतोऽभिमुखं प्रसृत एव स वत्सः।

---

( क्ष ) प्रकृष्टमधिकं वयो येषां ते प्रवयसो वृद्धाः। दिदृक्षवो द्रष्टुमिच्छवः।

( ज ) ईदृशस्य अलौकिकरूपसम्पन्नस्य निर्माणस्य गठनस्य आकारस्य सन्मूर्तिसम्पन्नस्येत्यर्थः, सत् साधु वृत्तं चरितं किं भिद्येत किमन्याद्भिन्नं भवेत्। साधु वृत्तं किमस्मिन् साधुमूर्त्तौ न तिष्ठेत् ? तिष्ठत्येव यत्राकृतिस्तत्र गुणा वसन्तीति न्यायादिति भावः।

( झ ) निशामितं श्रुतं गृष्टिवचनं येन सः, गृष्टिवचनं श्रुत्वेत्यर्थः। विसर्जिताः परित्यक्ताः ऋषिदारका मुनिबालका येन सः, सहचरमुनिशिशून् परित्यज्येत्यर्थः।

(२१) एतस्मिन् बालके विनयः शिष्टाचारः शिशुतामौग्ध्यं शैशवनिबन्धनसारल्यं ताभ्यां मसृणः स्निग्धः महिम्नां माहात्म्यानाम् उदारस्वभावानामित्यर्थः अतिशयः उत्कर्षः विदग्धैर्विचक्षणैर्निर्ग्राह्यः बोद्धुं शक्यः न पुनरविदग्धैः।

मनो मे सम्मोहः स्थिरमपि हरत्येव बलवान्
अयोधातुं यद्वत् परिलघुरयस्कान्तशकलः ॥ २१ ॥

[ प्रविश्य लवः स्वगतम् । ] अज्ञातनामक्रमाभिजनान् पूज्यानपि नः स्वतः कथमभिवादयिष्ये । [ विचिन्त्य । ] अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते । [सविनयमुपसृत्य ।] एष वो लवस्य प्रणामपर्य्यायः ( ञ ) ।

[ अरुन्धतीजनकौ । ] कल्याणिन् आयुष्मान् भूयाः ।

कौश । ताद ! मे चिरं जीव ( २० ) ।

अरु । एहि वत्स ! [ इति लवमुत्सङ्गे कृत्वा स्वगतम् । ] दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथो मे सम्पूर्णः ।

कौश । जाद ! इदो वि दाव एहि । [ उत्सङ्गे कृत्वा । ] अम्महे ण केअलं दरविअसन्तणीलुप्पलसामलुसदेण देहबन्धेन कवलिदारविन्दकेसरकसाअकण्ठकलहंसणिणाददीहरदीहरेण सरेण अ रामभद्दमणुहरदि, णं कठिणकमलगब्भपक्खलो सरीअप्फंसोवि तादिसोज्जेव वच्छस्स । जाद

( २० ) तात ! मे चिरं जीव ।

बलवान् सम्मोहः अस्य बालकस्य दर्शनजन्यं हर्षजाड्यं स्थिरं निश्चलं तपःसमाधिनियतत्वाद् विषयेभ्यः संयतमपीत्यर्थः मे मम मनश्चित्तं, परिलघुः अतिक्षुद्रः अयस्कान्तस्य मणिविशेषस्य शकलः खण्डः अयोधातुं लौहधातुं यद्वत् यथा इवेत्यर्थः हरति आत्माधीनं करोति । शिखरिणीवृत्तम् ।

( ञ ) अज्ञातानि नामानि, क्रमः यथायुक्तम् अभिवादनपौर्वापर्य्यं, अभिजनः कुलं च येषां तान् तथोक्तान् । स्वतः स्वयम् अन्येन वृद्धजनेन अनावेदितः सन्नित्यर्थः । अविरुद्धः शास्त्राविरुद्धः लौकिकाविरुद्धश्च ।

पेक्खामि दाव दे मुहम्। [ चिवुकमुन्नमय्य निरूप्य सवाष्पाकूतम्। ] राएसि! किं ण पेक्खसि, णिउणं णिरुविज्जमाणं से मुहं वच्छाए मुहचन्देण संवददि ज्जेव (२१)(ट)।

जन। पश्यामि सखि! पश्यामि।

कौश। अम्मो उम्मत्तीभूदं विअ मे हिअअं, किम्पि चिन्तअन्तो बहु विप्पलवदि (२२)(ठ)।

---

(२१) जात! इतोऽपि तावदेहि। अहो न केवलं दरविकसन्नीलोत्पलश्यामलोन्नतेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिनाददीर्घदीर्घेण स्वरेण च रामभद्रमनुहरति, ननु कठिनकमलगर्भपक्ष्मलः शरीरस्पर्शोऽपि तादृश एव वत्सस्य। जात! प्रेक्षे तावत् ते मुखम्। राजर्षे! किं न प्रेक्षसे, निपुणं निरूप्यमाणम् अस्य मुखं वत्साया वध्वा मुखचन्द्रेण संवदति एव।

(२२) अहो उन्मत्तीभूतमिव मे हृदयं, किमपि चिन्तयत् बहु विप्रलपति।

---

(ट) दरम् ईषत् विकसत् यत् नीलोत्पलं तद्वत् श्यामलः उन्नतश्च तेन। देहबन्धेन शरीरसङ्गठनेन। कवलितः भक्षितः अरविन्दकेशरः पद्मकिञ्जल्कः येन स अतएव कषायः मधुरः कण्ठः कण्ठस्वरो यस्य सः तथोक्तो यः कलहंसः राजहंसः तस्य निनाद इव दीर्घदीर्घः अतिदीर्घः तेन। अनुहरति अनुकरोति कठिनः कुड्मलावस्थो यः कमलस्य गर्भ इव पक्ष्मलः कोमलः। संवदति सादृश्यं कथयति।

(ठ) किमपि चिन्तयत् अकारणम् अनिर्वचनीयम् असम्भावनीयं चिन्तयत् बहु नानाप्रकारं विप्रलपति सर्वतो विरुद्धं प्रलपति। अयं रामतनयः, सीता जीविता वर्त्तते इत्यादिप्रकारेण समाश्वसितीत्यर्थः। अहो उन्मत्तीभूतमिव मे हृदयं किमपि एतस्य मुखं विप्रलभते इति पाठे किमपि अनिर्वचनीयं नानाभावोद्गमकारणम् एतस्य शिशोर्मुखं, कर्त्तृभूतम् उन्मत्तीभूतम् इव असम्भवमसङ्गतं चिन्तयदित्यर्थः मे हृदयं विप्रलभते प्रतारयति। अयं ते पौत्रः, अस्य माता जीवितास्ति तया च समागमस्ते भविष्यतीत्यादिप्रकारेण चिन्तयत् मे मानसं सौसादृश्यात् तथैवेत्यादिवाक्येनैव मां प्रत्याययति यथाकश्चिज्जनः प्रलपन्तं कञ्चिदुन्मत्तं तदनुवर्त्तनेन मिथ्याचारेण च प्रतारयति तद्वदिति भावः।

जन। निरूप्य।

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
सम्पूर्णप्रतिबिम्बितेव निखिला सैवाकृतिः सा द्युतिः।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ,
हा हा दैव! किमुत्पथैर्मम मनः पारिप्लवं धावति ॥२२॥

कौश। अत्थि दे मादा, सुमरसि वा तादं (२३)।

लवः। नहि नहि।

कौश। तदो कस्स तुमं (२४)।

लवः। भगवतो वाल्मीकेः।

---

(२३) अस्ति ते माता, स्मरसि वा तातम्।

(२४) ततः कस्य त्वम्।

---

(२२) अस्मिन् शिशौ बालके वत्सायाः सीतायाः रघूद्वहस्य रघुकुलश्रेष्ठस्य रामस्य च निखिला सम्पूर्णा सैव आकृतिः सैव मूर्त्तिः सा द्युतिः सा कान्तिः कान्तिसहिता सीतारामसम्बन्धीया मूर्त्तिरित्यर्थः सम्पूर्णम् अविकलं प्रतिबिम्बिता एव। रामसीतयोः सम्पूर्णं सादृश्यमस्मिन् बालके लक्ष्यते इति भावः। न केवलं दर्पणतलगतप्रतिबिम्बे इव आकारकान्त्योः सादृश्यम् अपितु वाक्यादीनामपीत्याह। सा वाणी वाक्, स एव विनयः शिष्टता, असौ सहजः स्वाभाविकः पुण्यानुभावः पवित्रप्रभावोऽपि। अतः सर्वमेव रामसीतागतं सौसादृश्यं दृश्यते तत् कथं न मन्ये रामसीतापुत्रोऽयमिति भावः। अथवा मृगतृष्णिकेव दुरारोहा आशैव मे चाञ्चल्याय कल्पते, तत् तस्याः निवृत्तिरेवोचिता, मनस्तु न विरमतीत्यत आह हा हेति। हा हा दैव! विधे! मम मनः पारिप्लवं चञ्चलं सत् किं कथम् अकारणेनेत्यर्थः उत्पथैः शिशुरयं सीतापुत्रः रामभद्रनन्दन इत्यादिना मनसोऽतिक्रान्तम् अधिगन्तुमिव उत्पथैः दुराशामार्गैरित्यर्थः धावति। शार्दूलविक्रीड़ितं वृत्तम्।

कौश। अइ जाद! कहिदव्वं कहेहि (२५)।

लव:। एतावदेव जानामि।

[नेपथ्ये।] भो: भो: सैनिका:! एष खलु कुमारश्चन्द्रकेतुराज्ञापयति, न केनचिदाश्रमाभ्यर्णभूमिराक्रमितव्येति (ड)।

[अरुन्धतीजनकौ।] अये! मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुरद्य द्रष्टव्य इत्यहो सुदिवस:।

कौश। वच्छलक्खणस्स पुत्तको आणवेदित्ति अमिअविन्दुसुन्दराइं अक्खराइं सुणीअन्ति (२६)।

लव:। आर्य्य! क एष चन्द्रकेतुर्नाम।

जन। जानासि रामलक्ष्मणौ दाशरथी।

लव:। एतावेव रामायणकथापुरुषौ।

जन। अथ किम् (ढ)।

लव:। तौ कथं न जानामि।

जन। तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतु:।

लव:। उर्मिलापुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्र:।

अरु। [विहस्य।] आविष्कृतं कथाप्रावीण्यं वत्सेन (ण)।

---

(२५) अयि जात! कथयितव्यं कथय।

(२६) वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीत्यमृतविन्दुसुन्दराण्यक्षराणि श्रूयन्ते।

---

(ड) आश्रमस्य मुन्यावसथस्य अभ्यर्णा समीपवर्त्तिनी भूमि:। (अभि+अर्द्(पीड़ा)+क्त:)।

(ढ) अथ किं तदन्यत् किं तदेव इत्यर्थ:। (हिन्दी) और क्या।

(ण) कथायाम् आख्यायिकायां प्रावीण्यं दक्षत्वं विचक्षणत्वम्।

जन। [ विचिन्त्य। ] यदि त्वमीदृशः कथायामभिज्ञस्तद् ब्रूहि तावत् पृच्छामस्तेषां दशरथात्मजानां किन्नामधेयानि अपत्यानि केषु केषु दारेषु प्रसूतानि ? ( त )।

लवः। नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्वः।

जन। किं न प्रणीत एव कविना ?

लवः। प्रणीतो न तु प्रकाशितः। तस्यैव खलु कोऽप्येकदेशः सन्दर्भान्तरेण रसवानभिनेयार्थः कृतः, तच्च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद्भरतस्य मुनेस्तौर्य्यत्रिकसूत्रकारस्य ( थ )।

जन। किमर्थम् ?

लवः। स किल भगवान् भरतस्तमप्सरोभिः प्रयोजयिष्यतीति।

जन। तत् सर्वमस्माकमिदमाकूतकरम् ( द )।

लवः। महती पुनस्तस्मिन् भगवतो वाल्मीकेरास्था, केषाञ्चिदन्तेवासिनां हस्तेन तत्पुस्तकं भरताश्रमं प्रति

---

( त ) दशरथात्मजानां दशरथपुत्राणाम् इति निर्द्धारे षष्ठी। नामान्येव नामधेयानि, स्वार्थे धेयप्रत्ययः। कानि नामधेयानि येषां तानि किन्नामधेयानि, अपत्यानि।

( थ ) अन्यः सन्दर्भः सन्दर्भान्तरस्तेन सन्दर्भान्तरेण अन्यप्रबन्धेन। अभिनेयः नटाद्यैरनुकरणादिना प्रकाशनीयः अर्थः प्रतिपाद्यवस्तु यस्य स तथोक्तः। अभिनयस्तु नटैरङ्गादिभिरवस्थानुकरणम्। यदुक्तं दर्पणकारैः;

भवेदभिनयोऽवस्थानुकारः स चतुर्विधः।
आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा॥

त्रयः परिमाणमस्येति त्रिकं तौर्य्यादित्रिकं तौर्य्यत्रिकं वाद्यगीतनृत्यात्मकम्।

( द ) आकूतं कुतूहलं करोति जनयति यत् तत्, कौतूहलजनकम्।

( ध ) तस्मिन्, अभिनेयार्थे सन्दर्भे। आस्था, यत्नः। अन्तेवासिनां शिष्या-

प्रेषितम् । तेषामानुयात्रिकश्चापपाणिरप्रमादार्थमस्मद्भ्राता प्रेषितः ( ध )।

कौश । जाद ! भादावि दे अत्थि ? ( २७ )।

लवः । अस्ति आर्य्यः कुशो नाम ।

कौश । जेट्ठोत्ति भणिदं होदि ( २८ )।

लवः । एवमेतत्, प्रसवक्रमेण स किल ज्यायान् इति ।

जन । किं यमजावायुष्मन्तौ ?।

लवः । अथ किम् ।

जन । कथय कथाप्रबन्धस्य कीदृशः पर्य्यन्तः ? ( न )।

लवः । अलीकपौरप्रवादोद्विग्नेन राज्ञा निर्वासितां देवयजनसम्भवां सीतादेवीमासन्नप्रसववेदनामेकाकिनीमरण्ये परित्यज्य लक्ष्मणः प्रतिनिवृत्त इति ।

कौश । हा वच्छे मुद्धचन्दमुहि ! को दाणिं दे कुसुमभूदस्स सरीरस्स देव्वदुव्विलासपरिणामो एअलिआए णिवडिदो ( २९ ) ( प )।

---

( २७ ) जात ! भ्रातापि तेऽस्ति ।

( २८ ) ज्येष्ठ इति भणितं भवति ।

( २९ ) हा वत्से मुग्धचन्द्रमुखि ! क इदानीं ते कुसुमभूतस्य शरीरस्य दैवदुर्विलासपरिणाम एकाकिन्या निपतितः ।

---

नाम् । आनुयात्रिकोऽनुचरः । चापपाणिर्धनुर्हस्तः । अप्रमादः विघ्ननिरासाय सावधानता अर्थः प्रयोजनं यत्र तत्, यद्वा प्रमाद्यते अनेनेति प्रमादो विघ्नः प्रमादनिवारणार्थम् अप्रमादार्थं नञत्र निषेधार्थकः । प्रेषितः प्रेरितः, वाल्मीकिनेति शेषः ।

( न ) पर्य्यन्तः शेषांशः ।

( प ) कुसुमभूतस्य कुसुमोपमस्य, भूतं क्ष्मादौ पिशाचादौ न्याये सत्योपमानयोरिति कोषः । अतिकोमलस्येत्यर्थः । कः कीदृशः । दैवस्य दुःखकरः

जन। हा वत्से!

नूनं त्वया परिभवश्च नवश्च घोरं
ताञ्च व्यथां प्रसवकालकृतामवाप्य।
क्रव्यादगणेषु परितः परिवारयत्सु
सन्त्रस्तया शरणमित्यसकृत् स्मृतोऽस्मि ॥ २३ ॥

लवः। [ अरुन्धतीं प्रति। ] आर्य्ये! कावेतौ?

अरु। इयं कौशल्या, अयं जनकः।

लवः। सबहुमानखेदकौतुकं पश्यति।

जनः। अहो दुर्मर्य्यादता दुरात्मनां पौराणाम्, अहो रामस्य राज्ञः क्षिप्रकारिता (फ)।

---

विलासः क्रियास्फूर्त्तिर्यस्मिन् स तथोक्तः परिणामः चरमदशा दैवकृतदुष्परिणाम इत्यर्थः। यद्वा दैवस्य विधिर्दुर्विलासः विडम्बना तेन यः परिणामः चरमदशा। विधेर्विडम्बनां विना कदापि तादृशः दुःखकरः परिणामो न भवतीति भावः। एकाकिन्याः निःसहायायाः। निपतितः जातः।

(२३) नूनं निश्चितं त्वया नवम् आकस्मिकं घोरं भयानकं परिभवं निर्वासनरूपं वज्रपाताधिकं तिरस्कारमित्यर्थः, प्रसवकालकृतां प्रसवसमयोत्पादितां तां दुःसहनीयां व्यथाञ्च अवाप्य आसाद्य क्रव्यादगणेषु व्याघ्रादिहिंस्रजन्तुवर्गेषु परितः समन्तात् परिवारयत्सु वेष्टमानेषु सन्त्रस्तया नितरां भीतया त्वया शरणमिति भयेषु पित्रादिरेव रक्षिता इति हेतोः असकृत् वारंवारं स्मृतोऽस्मि तात! त्राहि पितः! क्वासि क्वासि इत्यादिप्रकारेण भूयोभूयः आहूतोऽस्मीत्यर्थः। वसन्ततिलकं वृत्तम्।

(फ) मर्य्यादा समाजसुस्थितिहेतुकार्य्यानुसरणम्। म्रियते नश्यति अनया इति मर्य्या मृ+यत्, स्त्री आप्। असौख्यस्य नाशस्य वा कारणरूपा क्रिया तां दाति छिनत्ति इति मर्य्यादा। लोकसंस्थितिः, स्थितिः, नियमः, सीमा कर्त्तव्यसीमा, क्रिया, कर्त्तव्यं कार्य्यं, औचित्यमित्यादिशब्देनोपपद्यते। तस्यां दुर्गताः कृपणाः दुर्मर्य्यादास्तेषां भावः दुर्मर्य्यादता अतिक्रमः वृद्धिः, औचित्यातिक्रमः सीमोल्लङ्घनाद् वृद्धिरिति बोद्धव्यम्। अनार्य्यता इत्यर्थः। क्षिप्रं शीघ्रं विवेचनामकृत्वैवेत्यर्थः करोतीति तथोक्तः तस्य भावः अविलम्ब्यकारिता।

एतद्वैशसघोरवज्रपतनं शश्वन्ममोत्पश्यतः।
क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा। (२४)

कौश। भअवदि! परित्ताहि परित्ताहि, पसादेहि कुविदं राएसिं (३०)।

अरु। एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम्।
राजन्नपत्यं रामस्ते पाल्याश्च कृपणाः प्रजाः॥ २५॥

जन। शान्तं वा रघुनन्दने तदुभयं तत्पुत्रभाण्डं हि मे।
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः॥ २६॥

---

(३०) भगवति! परित्राहि परित्राहि, प्रसादय कुपितं राजर्षिम्।

---

(२४) एतत् विशसमेव वैशसं क्रूरं घोरं दारुणं वज्रपतनं सीतानिर्वासनमित्यर्थः शश्वत् निरन्तरम् उत्पश्यतः चिन्तयतः मम क्रोधस्य क्रोधाग्नेः चापेन धनुषा शापेन अभिसम्पातेन वा धक् इति शब्देन सहसा ज्वलितुम् अवसरः समयः। क्षत्रियत्वात् चापः ऋषित्वात् शापः इति द्विविधो मे वैरनिर्यातनोपायः। एवमुपायवानपि अहं कदाचित् कस्मिन्नपि चापः शापो वा न प्रयुक्तवान्। किन्तु अद्य सीतानिर्वासनदारुणवज्रपीड़ितोऽहं चापेन वा एतयोर्द्वयोरेकेनोपायेन भवत वैरं निहत्य मनसोऽनलं निवारयेयमिति भावः। अथमहं सरामान् सकलपौरजानपदान् हन्मीति फलितार्थः। शार्दूलविक्रीड़ितवृत्तस्य पूर्वार्द्धम्।

(२५) परिभूतानां परापमानितानां मनस्विनां तेजस्विनाम् एतत् हि वैरनिर्यातनं हि प्रायश्चित्तं सान्त्वनोपायः यद्वा परापमानितानां तेजस्विनां चित्तं प्रायः बाहुल्येन एतत् एतादृशं वैरनिर्यातनोन्मुखं भवतीत्यर्थः, किन्तु अत्र वैराभावात् न वैरनिर्य्यातनं सम्भवतीत्यत आह राजन्निति। हे राजन्! रामस्ते अपत्यं जामातृत्वात् सुहृत्पुत्रत्वाच्च तव पुत्रसदृशः अतो न निर्य्यातनीयः स इति भावः। कृपणा दीनाः क्षुद्रा इति यावत् प्रजाश्च पाल्याः रक्षणीयाः। अतो नायं क्रोधस्यावसर इति भावः।

(२६) वा पक्षान्तरे रघुनन्दने रामे तदुभयं चापः शापश्च शान्तं निरस्तं रामे तदुभयोरेकोऽपि न प्रयोज्यः। अत्र कारणमाह, तत् मे मम पुत्रभाण्डं

[ प्रविश्य संभ्रान्ता वटवः। ] कुमार! अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेषु श्रूयते, सोऽयमधुनास्माभिः प्रत्यक्षीकृतः।

लवः। अश्वोऽश्व इति पशुसमाम्नाये सांग्रामिके च पठ्यते, तद्ब्रूत कीदृशः ( ब )।

वटवः। श्रूयताम्।

पश्चात् पुच्छं वहति विपुलं, तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति, खुरास्तस्य चत्वार एव।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं वाख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः॥ २७॥

इति उपस्थत्याजिने हस्तयोराकर्षन्ति।

लवः। [ सकौतुकोपरोधविनयम्। ( भ ) ] आर्य्याः! पश्यत पश्यत, एभिर्नीतोऽस्मि। [ इति त्वरितं परिक्रामति। ]

---

पुनरुपसर्पेत्यपाव पौरो जनश्च भूयिष्ठा बहुला द्विजा ब्राह्मणाः बालाः शिशवः वृद्धाः वार्द्धक्यग्रस्ताः विकला विकलाङ्गाः विकलेन्द्रियाश्च खञ्जकुब्जादयः अन्धबधिरादयश्च स्त्रैणं स्त्रीसमूहश्च यस्मिन् स तथोक्तः अतस्तस्मिन्नपि चापः शापो वा न प्रयोज्यः इत्यहं निवृत्तोऽस्मीति भावः। शार्दूलविक्रीड़ितवृत्तस्य उत्तरार्द्धम्।

( ब ) पशुसमाम्नाये पशुशास्त्रे। सांग्रामिके युद्धशास्त्रे।

( २७ ) सः अश्वः पश्चात् पश्चाद्भागे विपुलं दीर्घं पुच्छं लाङ्गूलं वहति धारयति, तच्च पुच्छमित्यर्थः अजस्रं वारं वारं धूनोति सञ्चालयति, दीर्घा ग्रीवा यस्य स तथोक्तो भवति। तस्य खुराश्चत्वार एव शष्पाणि बालतृणानि अत्ति भक्षति, आम्रमात्रान् आम्रफलपरिमाणान् शकृत्पिण्डकान् पुरीषखण्डान् प्रकिरति त्यजति वा अथवा आख्यातैः आकारवर्णनादिभिः किम्, एहि एहि यामः तं द्रष्टुमित्यर्थः। उत्कण्ठायां द्विरुक्तिः। न कालविलम्बः करणीय इति भावः। कुतः, स पुनर्दूरं व्रजति गच्छति। अतःशीघ्रं यामः एहि एहीति। मन्दाक्रान्तावृत्तम्।

( भ ) कौतुकमश्वदर्शनार्थम्। उपरोधो वयस्यानाम्। विनयः जनककौशल्यादिकं परित्यज्य गमनाय अनुज्ञाप्राप्त्यर्थं तेषु शिष्टाचारः।

[ अरुन्धतीजनकौ । ] पूरयतु कुतूहलं वत्सः ।

कौश । भअवदि ! जाणामि, एदं अणालोअअन्ती ण जीआमि ( म ) विअ, अदो अण्णदो भविअ पेक्खम्ह दाव गच्छमाणं दीहाउम् ( २१ ) ।

अरु । अतिजवेन ( य ) दूरमतिक्रान्तः स चपलः कथं दृश्यते ।

[ प्रविश्य कञ्चुकी । ] भगवान् वाल्मीकिराह ज्ञातव्यमेतदवसरे भवद्भिरिति ( र ) ।

जन । अतिगम्भीरमेतत् किमपि भविष्यति ( ल ) । भगवति अरुन्धति ! सखि कौशल्ये ! आर्य्ये गृष्टे ! स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः । [ इति निष्क्रान्तो वृद्धवर्गः । ]

वटवः । पश्यतु हि कुमारस्तदाश्चर्य्यम् ।

लवः । दृष्टमवगतञ्च नूनमाश्वमेधिकोऽयमश्व इति ।

---

( २१ ) भगवति ! जानामि, एतमनालोकयन्ती न जीवामीव, अतोऽन्यतो भूत्वा पश्यामस्तावद्गच्छन्तं दीर्घायुषम् ।

---

( म ) न जीवामीव स्नेहाधिक्यात्तद्वियोगमसहिष्णुर्मृतवदसुस्थचित्तास्मीति भावः ।

( य ) अतिजवेन अतिवेगेन । दूरमतिक्रान्तो बहुदूरं गतः । चपलः बालकत्वात् चञ्चलस्वभावः ।

( र ) अवसरे यथाकाले भवद्भिर्ज्ञातुं शक्यते एव तत् किं समाच विज्ञापनप्रयत्नेन । नायमवसर इति नाहमधुना वक्ष्यामीति तात्पर्य्यार्थः ।

( ल ) एतत् शिशुविषयकं वृत्तं किमपि अतर्कितम् अतिगम्भीरम् अतिगुरुतरं भविष्यति ।

वटवः । कथं ज्ञायते ।

लवः । ननु मूर्खाः ! पठितमेव युष्माभिस्तत्काण्डे । किं न पश्यथ, प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारस्तत्प्रायमेवेदमपि दृश्यते, यदि इह न प्रत्ययस्तद्गत्वा पृच्छत (व) ।

वटवः । भो भोः ! किम्प्रयोजनोऽयमश्वः परिवृतः पर्य्यटति ।

लवः । [ सस्पृहमात्मगतम् । ] अये ! अश्वमेध इति विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रियपरिभावी महान् उत्कर्षनिकषः (श) ।

[नेपथ्ये ।] अयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥ २८ ॥

---

(व) तत्काण्डे अश्वमेधप्रकरणे । कवचा वर्माणि विद्यन्ते येषां ते कवचिनः वर्मधारिणः । दण्डिनः यष्टिधारिणः । निषङ्गिणः तूणीरवन्तः ।

(श) उत्कर्षे उत्कर्षलाभे वा सस्पृहम् । ऊर्ज्जो बलमस्यास्तीति ऊर्जस्वली बलवान् विरुद्धवादादिभिरखण्डनीय इत्यर्थः । सर्वेषां क्षत्रियाणां परिभावयतीति परिभावी पराभवसूचकः । उत्कर्षस्य प्राधान्यस्य निकषः स्वर्णादेः कषणप्रस्तरवत् उत्कर्षापकर्षपरीक्षाहेतुरित्यर्थः । उत्कर्षनिष्कर्ष इति पाठेऽपि स एवार्थः । उत्कर्षः निष्कृष्यते कियत्परिमाणोऽस्मिन्नुत्कर्षसारः इत्याकृष्य दृढं निष्पीड्य वा निर्णीयते अनेनेति उत्कर्षनिष्कर्षः ।

(२८) सप्तसु लोकेषु एकस्य अद्वितीयस्य वीरस्य दशकण्ठकुलद्विषः रावणवंशध्वंसकारिणः रामस्य अयमश्वमेधीयोऽश्वः इयं पताका वैजयन्ती विजयसूचककेतुरिति यावत् अथवा इयं वीरघोषणा अश्वपताकारूपा, नायमश्वः पताका वा अन्यप्रयोजना किन्तु रामस्य अद्वितीयवीरत्वप्रख्यापनार्थं लोकेषु प्रचारिता इत्यर्थः । अत्र यः कश्चित् प्रतिवादी भवति तदर्थं वा उत्सृज्यते स इममश्वं पताकां वा प्रतिबध्नात्विति भावः ।

लवः । [ सव्यथमिव । ] अहो ! सन्दीपनानि अक्षराणि ( ष ) ।

वटवः । किम् उच्यते, प्राज्ञः खलु कुमारः ( स ) ।

लवः । भो भोः ! तत् किमक्षत्रिया पृथ्वी ? यदेवमुद्धतमुद्घोष्यते ( ह ) ।

[ नेपथ्ये । ] अरे ! महाराजं प्रति कुतः क्षत्रियाः ।

लवः । धिग् जाल्मान् ( च ) ।

यदि ते सन्ति सन्त्वेव, केयमन्या विभीषिका ।
किमुक्तैः, शरसम्बाधां पताकां वो हराम्यहम् ॥ २८ ॥

भो भो वटवः ! परिहृत्य लोष्टैरभिघ्नन्तो नयत एनमश्वं एष रोहितानां मध्ये वराकश्चरतु ( क ) ।

---

( ष ) सन्दीपनानि गात्रदाहीनि अक्षराणि वचनानि असह्यानि खलु एतानि वचनानीत्यर्थः ।

( स ) किमुच्यते एभिरिति शेषः । अयमश्वः पताकेयमित्यादिना यदेभिरुक्तं न तस्य भावार्थं वयं विद्म इति कियतां वटूनामुक्तिः । अपरे च कियन्तः तं कुमारं रोषितं दृष्ट्वा अयि अश्वमेध इतीत्यादिना यदुक्तं कुमारेण तदेव प्रत्याख्यते एभिः तत् किमर्थं पुनरेव प्रश्नैः विरज्यते । प्राज्ञः कुमारः सर्वमेवानेन बुध्यते इत्यनेन प्रकारेण वटवः कुमारं सभयं स्तुवन्ति ।

( ह ) अक्षत्रिया वीरशून्येति भावः । उद्धतम् अतिक्रान्तमर्यादमतिगर्वितम् इति यावत् ।

( च ) जाल्मान् पामरान् । जाल्मः स्यात् पामरे क्रूरेऽसमीक्ष्यकारिणि चिष्विति मेदिनी ।

( २८ ) यदि ते महाराजरूपाः विभीषिकाः भयहेतवः सन्ति सन्तु एव इयमन्या अपरा महाराजातिरिक्ता अपरा का विभीषिका । महाराज इति ते परमविभीषणपदं तचाहं तृणाय मन्ये इति भावः । उक्तैः वागाडम्बरैः किं, वो युष्माकं शरेण तृणविशेषेण बाणेन वा सम्बाधा मिलनं यस्याः तां तथोक्तां शराग्रबद्धाम् अतितुच्छामित्यर्थः । पताकां केतुम् अहं हरामि गृह्णामि ।

( क ) रोहितानां मृगविशेषाणां, रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे । वराकः तुच्छः ।

[ प्रविश्य सक्रोधदर्पः पुरुषः । ] धिक् चापलं, किमुक्तवानसि, तीक्ष्णनीरसा ह्यायुधीयश्रेणयः शिशोरपि न इमां वाचमनुसहन्ते, राजपुत्रश्चन्द्रकेतुराकृष्टशरासनः, सोऽप्यपूर्वारण्यदर्शनकौतूहलाक्षिप्तहृदयो न परापतति अद्यापि, तत् त्वरितमपसर्पतानेन तरुगहनेन ( ख )।

वटवः । कुमार ! कृतमनेनाश्वेन, तर्जयन्ति विस्फुरितशस्त्राः कुमारमायुधीयश्रेणयः, दूरे चाश्रमपदमितस्त्वरेहि हरिणप्लुतैः पलायामहे ( ग )।

लवः । [ स्मितं कृत्वा । ] किं नाम विस्फुरन्ति शस्त्राणि । [धनुरारोपयन् ।

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारि घोरघनघर्घरघोषमेतत् ।

---

( ख ) तीक्ष्णा क्षमागुणरहिताः नीरसाः स्नेहरहिताः हि निश्चितम् आयुधीयश्रेणयः सैनिकनिचयाः । आयुधेन जीवन्तीति आयुधीयाः । इमां गर्विताम् । अपूर्वस्य अदृष्टपूर्वस्य अरण्यस्य वनस्य दर्शनाय यत् कौतूहलम् औत्सुक्यं तेन आक्षिप्तमाकृष्टं हृदयं यस्य सः । परापतति आगच्छति । अपसर्पत पलायध्वम् ।

( ग ) तर्जयन्ति, भर्त्सयन्ति । विस्फुरितानि प्रदीप्तानि कम्पितानि च शस्त्राणि येषां ते । कुमारं तर्जयन्तीत्यन्वयः । हरिणप्लुतैः, हरिणवत् द्रुतगतिभिः ।

( ३० ) ज्या मौर्वी एव जिह्वा रसना तया वलयिते वलयाकारेण आश्लिष्टे कवलग्रहणार्थं व्यग्रतया स्पृष्टे इवेत्यर्थः उत्कटे कोटी अटन्यौ एव दंष्ट्रे यस्य तत् तथोक्तम्, उद्गारी उद्गच्छन् घोरः भयङ्करः घनस्येव मेघस्येव घर्घरः घर्घरेत्याकारः श्रवणविकट इत्यर्थः घोषः शब्दो यस्मात् तत्तथोक्तम् एतत् चापं धनुः ग्रासप्रसक्तस्य जगद्ग्रासाय उद्यतस्य हसतः विकटहास्यं कुर्वतः अन्तकस्य यद्वक्त्रयन्त्रं तस्य जृम्भा व्यादानं तद्विडम्बि तदनुकारि विकटं भयङ्करम् उदरं

ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ ३० ॥

इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे ।

इति कौशल्याजनकयोगो नाम चतुर्थोऽङ्कः ।

---

## अथ पञ्चमोऽङ्कः ।

[ नेपथ्ये । ] भो भोः सैनिकाः ! जातं जातमवलम्बनमस्माकम् ।

नन्वेष त्वरितसुमन्त्रनुद्यमान-
व्यावल्गत्प्रजवनवाजिना रथेन ।

---

मध्यं यस्य तत्तथोक्तमस्तु भवतु । एतद् ज्यासंयुक्तम् एतन्मदीयं चापं जगद्ग्रासोद्यतकृतान्तस्य मुखसदृशं भवतु अजस्रं शरनिपातं करोतु इति भावः । अस्य मुखे जिह्वा अस्ति, धनुषि सा कुतः ज्याजिह्वेति । अस्य मुखे चर्वणहेतुः दंष्ट्रा अस्ति, धनुषि कुतस्तत्सम्भावना कोटिदंष्ट्रेति । अस्य भक्षणकाले मुखे जिह्वासञ्चालनं भवति धनुषि सा कुतः ज्याजिह्वया चलयितेति । अस्य मुखे भक्षणकाले मड्मड़ायितशब्दो भवति, धनुषि सः कुतः टङ्काररूपं घनघर्घरघोषमिति । कुतोऽस्य दाहादेन वा भक्षयेदिति मच्चापमपि सर्वं रामसैन्यम् आह्लादेन भक्षयिष्यतीति । कुतो यन्त्र इति यथा यन्त्रे त्वरितनिष्पेषादिना क्षणेन अनायासेन च कार्यं साधयति तद्वत् मे चापमिति । कुतो जृम्भा इति भक्षणकाले मुखव्यादानमावश्यकमेव । कुतस्तद्धनुषि ? तत्तु ज्याधनुर्मध्यगतः अवकाशः । कुतः अन्तकवक्त्रं तत्तु क्षणेन विश्वमपि भक्षितुं समर्थमिति । मम चापमपि तद्वत् सकलसैन्यं क्षणेन विनाशयितुं समर्थम् । इति एतत् साङ्गरूपकम् । वसन्ततिलकं वृत्तम् ।

---

( १ ) नन्वु भोः ! त्वरितं शीघ्रं सुमन्त्रेण तदाख्येन सारथिना नुद्यमानाः प्रेर्यमाणाश्चालिता इत्यर्थः व्यावल्गन्तः द्रुतं धावन्तः प्रजवनाः प्रबलवेगवन्तो

उद्घातप्रचलितकोविदारकेतुः
श्रुत्वा नः प्रधनमुपैति चन्द्रकेतुः ॥ १ ॥

ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः

साद्भुतहर्षसम्भ्रमश्चन्द्रकेतुः।

चन्द्र। आर्य्य सुमन्त्र! पश्य।

मुनिजनशिशुरेकः सर्वतः सैन्यकाये
नव इव रघुवंशस्याप्रसिद्धः प्ररोहः।
दलितकरिकपोलग्रन्थिटङ्कारघोर-
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ २ ॥
किरति कलितकिञ्चित्कोपरज्यन्मुखश्री-
रनवरतनिगुञ्जत्कोटिना कार्मुकेण।

---

वाजिनः अश्वाः यस्य तेन तथोक्तेन, उद्घातेन भूमेर्बन्धुरत्वात् ऊर्द्धाधःप्रतिघातेन प्रचलिताः मुहुः कम्पिताः कोविदारकाष्ठनिर्मिताः ध्वजाः रथध्वजा यस्य सः तथोक्तः एषः चन्द्रकेतुः वो युष्माकं प्रधनं युद्धं श्रुत्वा उपैति आगच्छति। प्रहर्षिणीवृत्तम्।

(२) एकः एकाकी असहाय इत्यर्थः मुनिजनशिशुः मुनिबालकः, रघूनां वंशः अन्वय एव वंशः वेणुः तस्य अप्रसिद्धः नवोद्गतत्वादसम्यक् पूर्णदेहः नवः नवजातः प्ररोहः करीर इव रघुवंशसम्भूतबालक इवेति फलितार्थः अन्यथा एवम्भूतवीर्य्यस्यासम्भवादिति भावः। सैन्यकाये हस्त्यश्वरथपादातरूपसैन्यदेहे इत्यर्थः सर्वतः समन्ततः सर्वाङ्गेष्वित्यर्थः। ज्वलितेतिक्रियाधिकरणमेतत्। दलिताः विदारिताः ये करिकपोलग्रन्थयो गजगण्डसन्धिस्थानानि तेषां ये टङ्काराः टं टं इत्याकारसन्धिभङ्गहेतुकशब्दास्तैर्घोरं भयानकं यथा तथा ज्वलितानि कपोलेषु आघातवशेन अभ्युत्पातात् ज्वलितानि दीप्यमानानि शराणां सहस्राणि यस्य स तथोक्तः सन् मे मम कौतुकं विस्मयं करोति जनयति। अत्र रघुवंशे वंशत्वारोपः शिशौ प्ररोहत्वारोपे हेतुरिति परम्परितं रूपम्। मालिनी वृत्तम्।

(३) कलितः कृतः यः किञ्चित्कोपः ईषत्क्रोधस्तेन रज्यन्ती रक्तवर्णा मुखश्री वदनकान्तिर्यस्य स तथोक्तः समरशिरसि रणमूर्द्धनि युद्धव्यापारातिशये

समरशिरसि चञ्चत्पञ्चचूड़श्चमूनाम्

उपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ ३ ॥

आश्चर्य्यमाश्चर्य्यम् ।

सुमन्त्रः । आयुष्मन् !

अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम् ।

कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥४॥

चन्द्र । इमन्त्वेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्र-पते (क) ।

अयं हि शिशुरेककः समरभारभूरिस्फुरत्-

करालकरकन्दलीकलितशस्त्रजालैर्बलैः ।

---

इति यावत् चञ्चन्त्यः चतुर्दिक्षु हस्तपदश्रवणचक्षुरादीनामनियतनियोगात् चञ्चलाः पञ्चचूड़ाः पञ्चशिखा यस्य स तथोक्तः, अभिनवकृतचूड़ाकरणसंस्कारात् कुलधर्म्मोपदिष्टपञ्चशिखाधारणं पञ्चशिखी वेति बौधायनस्मरणात् । कोऽपि अपरिचितः अयं वीरः पोतः वीरः शिशुः अनवरतम् अविरतं निगुञ्जन्त्यौ आकर्षणविप्रकर्षणाभ्यां झंझमिति शब्दं कुर्वन्त्यौ कोटी अटन्यौ यस्य तेन तथोक्तेन कार्मुकेण धनुषा चमूनां सेनानामुपरि शरतुषारम् अगणिततुषारवृष्टिमिव शरवृष्टिं किरति वर्षति । मालिनीवृत्तम् ।

(४) अतिशयितः अतिक्रान्तः सुरासुराणां प्रभावः पराक्रमो येन तं तथोक्तम् । एतेन चन्द्रकेतोर्हीनताख्यापनमाशङ्क्याह अतएव तवैव तुल्यरूपं सदृशं शिशुम् अवलोक्य कुशिकसुतस्य कुशिकनन्दनस्य विश्वामित्रस्य मखं यज्ञं द्विषन्तीति तथोक्तानां यज्ञनाशकानां राक्षसानामित्यर्थः प्रमाथे निधने प्रमाथकाले इत्यर्थः धृतधनुषं गृहीतकार्मुकं रघुनन्दनं रामभद्रं स्मरामि । देहसादृश्येन वीर्य्यसादृश्येन च अयं बालकः रामवत् मे प्रतिभातीति भावः । वतैव तुल्यरूपमिति पाठे वत आह्लादे तुल्यरूपं रामसदृशकान्तिम् । पुष्पिताग्रावृत्तम् ।

(क) एकम् एकाकिनं सहायान्तरविरहितम् इमं शिशुम् उद्दिश्य इमं प्रतिबोधनार्थं भूयसां बहूनां सैन्यानां मे बलानामारम्भः शरादिक्षेपणव्यापारः अशक्तिसूचकोऽयं सकलसैन्यसमवाय इत्यर्थः इति हेतोः हृदयम् अपत्रपते लज्जते मनसि मे लज्जा जायते इति भावः ।

क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदवारिदैरावृतः ॥ ५ ॥

सुम। वत्स! एभिः समस्तैरपि किमस्य, किं पुनर्व्यस्तैः (ख)।

चन्द्र। आर्य्य! त्वर्य्यतामनेन हि महानाश्रितजनप्रमाथोऽस्माकमारब्धः। तथाहि,

आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन्।
वेल्लद्भैरवरुण्डमुण्डनिकरैर्वीरो विधत्ते भुवः
तृप्यत्कालकरालवक्त्रविघसव्याकीर्य्यमाणा इव ॥ ६ ॥

---

(५) अयमेकक: एकाकी सोऽपि नितान्तमल्पवयस्क इति कः शिशुर्बालकः समरभारे रणमूर्द्धनि युद्धव्यापारबाहुल्ये इति यावत्। समररेणुष्विति पाठे रणस्थलीोत्थितधूलिषु भूरि बहुलं स्फुरन्ति चाञ्चल्यात् विद्युदिव दीप्यमानानि करालानि भीषणानि करकन्दलीकलितानि गुल्मसदृशहस्तैर्धृतानि शस्त्रजालानि आयुधसमूहा येषां तैः तथोक्तैः क्वणन्तीभिः शब्दायमानाभिः कनककिङ्किणीभिः सुवर्णमयक्षुद्रघण्टिकाभिः झणझणायिता झन् झन् इत्याकारेण शब्दिताः स्यन्दना रथा येषु तैस्तथोक्तैः तथा अमन्दः वेगवाही यो मदः स एव दुर्दिनं धारावर्षो येषां तादृशा द्विरदा एव मेघा येषु तैस्तथोक्तैर्बलैरस्मत्सैन्यैः आवृतः आच्छादितः। अत्र द्विरदसहिताः सैनिकाः मेघाः स्फुरच्छस्त्राणि विद्युत् सघण्टिकरथशब्दाः निर्घोषाः हस्तिनां मदस्रावश्च धारावर्षं इति सुधीभिर्बोद्धव्यम्। रूपकालङ्कारः। पृथ्वी वृत्तम्।

(ख) एभिः सैन्यैः। समस्तैः सर्वैः। अस्य बालकस्य किं किमस्य क्रियतामित्यर्थः। किं पुनर्व्यस्तैः व्यस्तैर्विभक्तैः पृथक् पृथक् युद्धं कुर्वद्भिः पुनः किं किं क्रियताम्। एभिरस्य पराजयः सर्वथैवासम्भव इति भावः।

(६) अयं वीरः, आगुञ्जतां प्रधनीयसैन्यकोलाहलादिकं श्रुत्वा भयेन शब्दायमानानां गिरिकुञ्जकुञ्जराणां पार्वतवनगजानां घटाभिः समूहैः विस्तीर्णः प्रवृद्धः अतएव कर्णानां ज्वरः पीड़ा यस्मात् तं तथोक्तं घनहस्तिशब्दैः प्रवृद्धत्वात्

सुम। [स्वगतम्।] कथमीदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसम्प्रहारमनुजानीयाम्। [विचिन्त्य।] अथवा इक्ष्वाकुगृहवृद्धाः खलु वयं, प्रत्युपस्थिते च का गतिः (ग)।

चन्द्र। [सविस्मयलज्जासम्भ्रमम्।] धिक् प्रतिनिवृत्तानि (घ) सर्वतः सैन्यानि मम।

सुम। [रथवेगमभिनीय।] आयुष्मन्! स एष वाग्विषयीभूतस्ते स वीरः (ङ)।

चन्द्र। [विस्मृतिमभिनीय।] आर्य्य! किं तन्नामधेयमाख्यातमाख्यायकैः? (च)।

सुम। वत्स! लव इति।

---

कर्णपीड़ाजनकमित्यर्थः। तथा अमन्दैः गम्भीरैः दुन्दुभिरवैः ढक्काशब्दैः आध्मातं स्फीतं विवृद्धमिति यावत् ज्यानिर्घोषं मेघवद् गम्भीरं ज्यानिनादम् उज्जृम्भयन् उत्पादयन् भुवः रणभूमेः वेल्लतां पूर्वकृतवेगवशाद् धावतां भैरवाणां भयङ्कराणां रुण्डानां कबन्धानां मुण्डनिकरैः शिरःसमूहैः भुवि पतितैरित्यर्थः तृप्यन्तीति तृप्यन् तस्य भोजने पर्य्याप्तिं गतस्य इति यावत् कालस्य कृतान्तस्य करालवक्त्रैः विघसैः अन्नैः कृतान्तभुक्तावशिष्टैरिवेत्यर्थः व्याकीर्य्यमाणा व्याप्यमाना विषक्ति। उत्प्रेक्षालङ्कारः। शार्दूलविक्रीड़ितम्।

(ग) ईदृशेन प्रभूतपराक्रमशालिना। द्वन्द्वसम्प्रहारं द्वन्द्वयुद्धम्। इक्ष्वाकुगृहवृद्धाः बहुकालं व्याप्य इक्ष्वाकुवंशे अवस्थानात्तेषां युद्धनियमादिकं सर्वमेवावगतोऽस्मि युद्धे तेषामप्रतिवर्त्तनरूपं व्रतञ्च जानामीति भावः। प्रत्युपस्थिते च का गतिः। युद्धञ्च अधुना उपस्थितमेव, तदस्मिन् उपस्थिते युद्धे युद्धानुज्ञादानादन्यत् किं कर्त्तव्यम्। नान्यत् किञ्चित् कर्त्तव्यमस्तीति भावः।

(घ) प्रतिनिवृत्तानि पराङ्मुखीभूतानि।

(ङ) अस्माकं वाचां विषयीभूतः गोचरीभूतः। एषामपरिभवनीय इत्यादिरूपेण कथित इत्यर्थः स सम्प्रति चक्षुषा प्रत्यक्षीकृत इत्यर्थः।

(च) आख्यायकैः रणक्षेत्रे समरारम्भप्राक्काले उभयपक्षीयप्रधानपुरुषाणां सांग्रामिकाणां नामधेयानि कथ्यन्ते इति व्यवहारः। आख्यायकैः नामधेयं कथयद्भिः तत्कथनार्थनियुक्तैः।

चन्द्र। भो भो लव! महाबाहो! किमेभिस्तव सैनिकैः।
एषोऽहमेहि मामेव, तेजस्तेजसि शाम्यतु॥ ७॥

सुम। कुमार! पश्य पश्य।

व्यपवर्त्तत एष बालवीरः पृतनानिर्मथनात् त्वयोपहूतः।
स्तनयित्नुरवादिभावलीनामवमर्दादिव दृप्तसिंहशावः॥ ८॥

ततः प्रविशति त्वरितोद्धतक्रमो (छ) लवः।

लवः। साधु, राजपुत्र! साधु, सत्यमैच्वकः खल्वसि, तदयं परागत एवास्मि।

नेपथ्ये महान् कलकलः।

लवः। [सावेगं परावृत्त्य।] कथमिदानीं भग्ना अपि प्रतिनिवृत्त्य युद्धाभिसारिणः पर्य्यवष्टभ्य निघ्नन्ति मां चमूपतयः (ज) धिग् जाल्मान्।

---

(७) भो भो महाबाहो लव! एभिः सैनिकैः तव किम् एभिः सह युद्धेन किम्, एतत्पराजयेनापि न किमपि गौरवमिति भावः। एषः अहम् उपस्थित इत्यर्थः, एहि त्वं युद्धार्थं मां गृहाण इत्यर्थः। तेजस्त्वद्रूपम् इत्यर्थः तेजसि मद्रूपे इत्यर्थः। शाम्यतु शान्तिं गच्छतु। यथा एकं तेजः महति अपरस्मिंस्तेजसि मिलित्वा विलीनं भवति न पुनस्तस्य दर्शनं भवतीति भावः। मत्पराक्रमेणैव ते पराभवो भविष्यतीति निष्कृष्टार्थः।

(८) स्तनयित्नोर्मेघस्य रवात् निर्घोषात् निर्घोषं श्रुत्वा मेघशब्देनाकृष्टः सन्नित्यर्थः इभावलीनां हस्तियूथानाम् अवमर्दात् प्रमाथात् सिंहशावः सिंहशिशुरिव एष बालवीरः शिशुवीरः त्वया उपहूतः युद्धार्थमाहूतः सन् पृतनानां चमूनां निर्मथनात् संहननात् व्यपवर्त्तते प्रतिनिवर्त्तते। औपच्छन्दसिकं वृत्तम्।

(छ) त्वरितः तेजसा त्वरायुक्तः उद्धतः सदर्पश्च क्रमः पदक्षेपो यस्य सः तथोक्तः।

(ज) भग्ना अपि मदस्त्रनिर्भिन्नदेहा अपि अशक्ता अपीत्यर्थः। युद्धाय

अयं शैलाघातक्षुभितवड़वावक्त्रहुतभुक्-
प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे।
समन्तादुत्सर्पन् घनतुमुलसेनाकलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव ॥ ९ ॥

इति परिक्रामति।

चन्द्र। भो भोः कुमार!
अत्यद्भुतादसि गुणातिशयात् प्रियो मे,
तस्मात् सखा त्वमसि, यन्मम तत्तवैव।
तत्किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥ १० ॥

---

अभिसरन्ति मामनुसरन्तीति युद्धाभिसारिणः युद्धार्थमागताः पर्य्यवष्टभ्य परितः सदर्पं स्थित्वा दर्पेणात्मानं स्थापयित्वेत्यर्थः।

(९) प्रलयपवनेन प्रलयवातेन आस्फालितः संहारार्थं प्रेरितः पयोराशेः अम्बुधेरोघः प्रवाह इव समन्तात् सर्वदिक्षु उत्सर्पन् आशैलशृङ्गम् उद्गच्छन् अयं घनः सान्द्रः, तुमुलः सङ्कुलः सेनाकलकलः सैन्यकोलाहलः शैलानां पर्वतानाम् आघातेन क्षुभितः चाञ्चल्यं प्रापितः यो वड़वावक्त्रहुतभुक् वाड़वानलः इत्यर्थः स एव प्रचण्डः अत्युग्रः यः मे मम क्रोधार्चिर्निचयः क्रोधानलशिखासमूहः तस्य कवलत्वं ग्रासत्वम् एकवारमात्रमुखप्रवेशयोग्याशनीयत्वं व्रजतु प्राप्नोतु। क्रुद्धस्य मम दृष्टिमात्रेणैव सर्वं एषः कोलाहलः प्रशमं यास्यतीति भावः। शिखरिणीवृत्तम्।

(१०) त्वम् अत्यद्भुतात् अत्याश्चर्य्यजनकात् गुणातिशयात् गुणाधिक्यात् हेतोः मे मम प्रियोऽसि प्रणयपात्रं भवसि, तस्मात् कारणात् त्वं सखा मित्रमसि, अतएव यत् मम मदीयं तत् तव त्वदीयमेव। तत् तस्मात् कारणात् निजे मदीयत्वात् त्वदीये परिजने सैन्यनिचये किं कथं कदनं प्रमाथं करोषि पीड़ां जनयसीत्यर्थः। ननु भोः एष चन्द्रकेतुरहं तव दर्पस्य वीरत्वगर्वस्य निकष्यते स्वर्णम् अस्मिन्निति निकषः कषणप्रस्तरः स्वर्णपरीक्षाभूमिरिति यावत्। प्रकृतवीर्य्यवत्त्वात् ते गर्वः सारवान् न वा इति मयि एव ते वीरत्वगर्वस्य परीक्षा भविष्यतीत्यर्थः। वसन्ततिलकं वृत्तम्।

लवः । [ सहर्षसम्भ्रमं परावृत्य । ] अहो ! महानुभावस्य प्रसन्नकर्कशा वीरवचनप्रयुक्तिर्विकर्त्तनकुमारस्य । तत् किमेभिः एनमेव तावत् सम्भावयामि ( झ ) ।

पुनर्नेपथ्ये कलकलः ।

लवः । [ सक्रोधनिर्वेदम् । ] आः कदर्थितोऽहमेभिर्वारं वारं वीरसंवादविघ्नकारिभिः ( ञ ) । [ तदभिमुखं परिक्रामति । ]

चन्द्र । आर्य्य ! दृश्यतामितद्द्रष्टव्यम् ।

दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा ।
द्वेधासमुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥ ११ ॥

---

( झ ) महानुभावस्य उदाराशयस्य, अन्यथा एतादृशी वचनभङ्गी न स्यादिति भावः । प्रसन्ना स्निग्धा कर्कशा रूक्षा च महावंशसम्भूतत्वात् स्वाभाविकसौजन्याद्वीररसोद्रेकाच्चेति भावः । वीरवचनप्रयुक्तिः वीरोचितवाग्विन्यासः । एभिः सैन्यैः । सम्भावयामि युद्धप्रियत्वात् वीराणां, युद्धेनैव एनं चन्द्रकेतुं सम्मानयामीति भावः ।

( ञ ) निर्वेदः विरक्तिः । कदर्थितः कः कुत्सितोऽर्थः कदर्थः कुत्सितपदार्थः ततः कृतौ णिचि कर्मणि क्तः कदर्थितः कुत्सितत्वेन कृतावज्ञः अन्याय्यव्यवहारेण उद्वेजितः इत्यर्थः । कः स अन्याय्यव्यवहार इति विशेषणमुखेन कथयति, वारं वारं वीरसंवादविघ्नकारिभिः वीरेण चन्द्रकेतुना सह यः संवादः संग्रामप्राक्कालोचितः संलापस्तस्य पुनः पुनः विघ्नकारिभिर्व्याघातजनकैः । आः क्रोधसूचकमव्ययम् ।

( ११ ) कौतुकवता सकौतूहलेन दर्पेण वीरोचितवीर्य्यगर्वेण मयि बद्धं कृतं लक्ष्यं दृष्टिनिक्षेपो येन स तथोक्तः अनेन चन्द्रकेतुना पुरस्कृतत्वं व्यज्यते । पश्चात् पृष्ठतः, बलैः मदीयैः सैन्यैः अनुसृतः अनुधावितः, उदीर्णम् उद्यतं धनुः

सुम। कुमार एवैनं द्रष्टुमपि जानाति, वयन्तु केवलं परवन्तो विस्मयेन (ट)।

चन्द्र। भो भो राजानः!

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वप्येकस्मिन् कवचनिचितैर्मेध्यचर्मोत्तरीये।
कालज्येष्ठैरचरमवयःकाम्यकाये भवद्भि-
र्योऽयं बद्धो युधि परिकरस्तेन वो धिग् धिगस्मान् ॥१२॥

लवः। [ सक्षोभम्। ] कथमनुकम्पते नाम। [विचिन्त्य।] भवतु, कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत् सैन्यानि संस्तम्भयामि (ठ)। [ इति ध्यानं नाटयति। ]

---

शरासनं येन स तथोक्तः अयं वीरः द्वेधा पश्चात् पुरतश्च समुद्गतयोः प्रवहतोः महतोर्वातयोर्मध्ये तरलस्य चलितस्य, मघोन इन्द्रस्येदं माघवतम् ऐन्द्रं सम्बन्धार्थे अण्। माघवतचापधरस्य धृतेन्द्रधनुषः मेघस्य मेघस्येवेत्यर्थः लक्ष्मीं श्रियं शोभामिति यावत् धत्ते धारयति। वसन्ततिलकं वृत्तम्।

(ट) वीरस्वभावः वीरैरेव बोध्य इत्यर्थः। विस्मयेन परवन्तः परवशाः जडीकृता इति यावत्।

(१२) संख्यां गणनाम् अतीतैः अतिक्रान्तैः अगण्यैरित्यर्थः द्विरदतुरगस्यन्दनस्थैः हस्त्यश्वरथारूढैः कवचैः वर्मभिः निचितैः आवृतैः तथा कालेन वयसा ज्येष्ठैः सर्वथा श्रेष्ठसाधनसम्पन्नैरित्यर्थः भवद्भिः पदातौ पादचारिणि एकस्मिन् अद्वितीये मेध्यं यज्ञीयं चर्म उपवीतरूपं गात्रावरणं यस्य तस्मिन् गात्रावरणशून्ये इत्यर्थः अचरमेण अभिनवेन वयसा काम्यः कोमलः कायो यस्य तस्मिन् तथोक्ते अस्मिन् शिशौ योऽयं परिकरः समारम्भः रणोद्यम इति यावत् बद्धः कृतः। भवेत् परिकरः सङ्घे पर्यङ्कपरिवारयोः प्रगाढगात्रिकाबन्धे समारम्भविवेकयोरिति मेदिनी। तेन समारम्भेण हेतुना वो युष्मान् धिक् युष्माकम् अस्मत्सम्बन्धित्वाच्च अस्मानपि धिक्। मन्दाक्रान्तावृत्तम्।

(ठ) सक्षोभं सव्यथम् उपकरणसमन्वितेन तद्बलेन सह युद्धे स्वाशक्तिसूचकेन चन्द्रकेतोर्वचनेनात्मानमवज्ञातं मन्यमान इत्यर्थः। संस्तम्भयामि सम्मोहजननेन निश्चलानि नीरवाणि च करोमीत्यर्थः।

सुम। तत्किमकस्मात् अस्मत्सैन्यघोषः प्रशाम्यति ?

लवः। पश्याम्येनमधुना सप्रगल्भम् (ङ)।

सुम। [ससम्भ्रमम्।] वत्स! मन्ये कुमारेणानेन जृम्भकास्त्रमामन्त्रितम् (ढ)।

चन्द्र। अत्र कः सन्देहः।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति।
अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते
नियतममितवीर्यं जृम्भते जृम्भकास्त्रम्॥ १३॥

आश्चर्यमाश्चर्यम्।

पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभोजृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः।

---

(ङ) सप्रगल्भम् उच्चैर्वचःप्रयोगेण सगर्वमित्यर्थः। एनं पश्यामि सदी-यास्त्रनिराकरणेऽस्य यागनुरूपं सामर्थ्यं कियत्परिमाणं पश्यामीत्यर्थः।

(ढ) आमन्त्रितं मन्त्रोच्चारणपूर्वकं प्रयुक्तम्।

(१३) इह सैन्यमध्ये भीमः भीषणः तमसोऽयं तामसः विद्युतोऽयं वैद्युतः। चः समुच्चयार्थकः। तमसो विद्युतश्च उभयोरयं व्यतिकरः सन्निपातः, प्रणिहितं सैन्येषु घोषप्रशमनं किमिदमापतितमिति निर्णयार्थं प्रयुक्तमपि चक्षुः ग्रस्तम् आदौ तमसा विद्युता च सहसा आक्रान्तं पश्चात् मुक्तं त्यक्तं कृत्वा हिनस्ति क्लिश्नाति, अथ किञ्च एतत् सैन्यं लिखितमिव पटे चित्रितमिव अस्पन्दं निश्चेष्टम् आस्ते तिष्ठति। अतः नियतं निश्चितम् अमितम् अपरिमितं वीर्यं प्रभावो यस्य तत् तथोक्तं जृम्भकास्त्रं जृम्भते प्रादुर्भवति। जृम्भकास्त्रस्य प्रादुर्भावं विना एतत् सर्वं न सम्भवतीति भावः। मालिनीवृत्तम्।

(१४) पातालस्य सहजान्धकारस्य रसातलस्य उदरे मध्ये अधिकान्धकारे इत्यर्थः ये कुञ्जाः वृक्षलतादिनिर्मितच्छायागृहाः तेषु ततोऽपि गाढान्धकारेषु इत्यर्थः पुञ्जितानि सञ्चितानि एकत्रीकृतानि निरतिशयसान्द्रीकृतानीति यावत् यानि तमांसि अन्धकाराणि तैरिव श्यामैः कृष्णवर्णैः, तथा उत्तप्तं अग्निसंयोगेन

कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवाकीर्य्यते
मीलन्मेघतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ॥

सुम। कुतः पुनरस्य जृम्भकाणामागमः स्यात् (ण)?।

चन्द्र। भगवतः प्राचेतसादिति मन्यामहे (त)।

सुम। नास्य व्यवहारोऽस्त्रेषु, विशेषतो जृम्भकेषु। यतः,

कृशाश्वतनया ह्येते कृशाश्वात् कौशिकं गताः।
अथ तत्सम्प्रदायेन रामभद्रे स्थिता इति ॥ १५ ॥

चन्द्रः। अपरेऽपि परमोपचीयमानसत्त्वप्रकाशाः स्वयं हि मन्त्रदृशः पश्यन्ति (थ)।

---

अग्निवर्णं सत् स्फुरतीति स्फुरत् चञ्चलं तरलमिति यावत् यत् आरकूटं पित्तलं तस्य यत् कपिलं पिङ्गलं ज्योतिः तदिव ज्वलन्ती उज्ज्वला दीप्तिः द्युतिर्येषां तैः तथोक्तैः जृम्भकास्त्रैः कल्पस्य प्रलयकालस्य आक्षिप्यते संक्रियते एभिः इत्याक्षेपाः संहारहेतवः तथा कठोराः प्रचण्डाः तथा भैरवा भीषणाश्च ये मरुतः ऊनपञ्चाशद्वायवः तैर्व्यस्तैः चालितैः मीलन्तः संसजन्तः मेघा येषु ते तथा तड़िद्भिः विद्युद्भिः कड़ाराणि पिङ्गलवर्णानि कुहराणि गह्वराणि येषां, कुहरं गह्वरे छिद्रे क्लीवं नागान्तरे पुमानिति मेदिनी। ते, तैश्च तैः मीलन्मेघतड़ित्कड़ारकुहरैः विन्ध्याद्रिकूटैः विन्ध्यपर्वतशृङ्गैरिव नभः आकाशम् अवाकीर्य्यते व्याप्यते। उत्प्रेक्षालङ्कारः। शार्दूलविक्रीड़ितं वृत्तम्।

(ण) आगमः प्राप्तिः लाभः। अस्येति शेषे षष्ठी न कर्त्तरि उभयप्राप्तौ कर्मण्येवेति नियमात्।

(त) प्राचेतसात् वाल्मीकेः। एवमुत्तरत्रापि अस्य वाल्मीकेः।

(१५) एते जृम्भकाः हि कृशाश्वस्य मुनेस्तनयाः कृशाश्वेन सृष्टा इत्यर्थः कृशाश्वात् कौशिकं कुशिकपुत्रं विश्वामित्रं गताः, अथ अनन्तरं तस्य विश्वामित्रस्य सम्प्रदायेन शिष्यत्वेन सम्प्रदानेन, सम्प्रदानेनेति पाठे सुगमम्। हेतुना रामभद्रे स्थिताः तिष्ठन्ति। व्यवस्थिता इति पाठे स एवार्थः।

(थ) परमम् अत्यन्तम् उपचीयमानं परिवर्द्धमानं यत् सत्त्वं सत्त्वगुणः तस्मात् प्रकाशः तत्त्वप्रकाशः येषां ते तथोक्ताः अपरे अन्ये मन्त्रदृशः मन्त्ररहस्यविदोऽपि स्वयं हि निश्चितं पश्यन्ति जृम्भकादीनीति शेषः। इदा निश्चितु-

सुम। वत्स! सावधानो भव, परागतः प्रवीरः।

[कुमारौ अन्योऽन्यं प्रति।] अहो प्रियदर्शनः कुमारः।

सस्नेहानुरागं निर्वर्ण्य

यदृच्छासंवादः किमु, किमु गुणानामतिशयः
पुराणो वा जन्मान्तरनिविड़बन्धः परिचयः।
निजो वा सम्बन्धः किमु विधिवशात् कोऽप्यविदितो
ममैतस्मिन् दृष्टे हृदयमवधानं रचयति॥ १६॥

सुम। भूयसा जीविधर्म एषः, यद्रसमयी कस्यचित् क्वचित् प्रीतिः, यत्र लौकिकानामुपचारस्तारामैत्रकं वा

---

अपि शक्नुवन्तीति भावः। यद्वा परमम् अत्यन्तमुपचीयमानं यत् सत्त्वं तदेव प्रकाश्यते अनेनेति प्रकाशः प्रकाशसाधनं येषां ते तथोक्ताः। सत्त्वं नाम प्रकाशादिसाधनं प्रकृतेरन्यतमांशः। यदुक्तं गीतायां, तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयमिति।

(१६) किमु यदृच्छया दैवगत्या जातः अहेतुक इत्यर्थः संवादः संलापहेतुमैत्री आसक्तिरिति यावत्। न च तत् सम्भवति दृष्टोऽदृष्टो वा सर्वत्रैव फलं प्रति हेतुरस्त्येव इत्यत आह किमु गुणानां वीर्य्यादीनामतिशयः आतिशय्यम् कथं वा गुणातिशये एवं पूर्वपरिचितवदस्मिन् प्रीतिर्भवतीत्याह वा अथवा जन्मान्तरे अन्यस्मिन् जन्मनि न तु कदाचिदिह जन्मनीत्यर्थः निविड़ः दृढ़ः बन्धो बन्धनं यस्य तादृशः पुराणः परिचयः बन्धुत्वादिसम्बन्धेन ज्ञानं किमु वा विधिवशात् दैवानुरोधात् अविदितः अनभिज्ञातः कोऽपि निजः स्वाभाविकः सोदरत्वादिरूपः सम्बन्धः एषां मध्ये एकतम इत्यर्थः दृष्टे एतस्मिन् मम हृदयम् अन्तःकरणं अवधीयतेऽनेनेति अवधानं स्थिरतासाधनं संयोगभेदं रचयति करोति। यद्वा अवधानम् आसक्तिं प्रीतिमिति यावत् रचयति कारयति। शिखरिणीवृत्तम्।

(द) भूयसा प्रायेण एष जीविधर्मः प्राणिस्वभावः यत् कस्यचित् क्वचित् कस्मिंश्चित् जनविशेषे रसमयी द्रवकरी प्रीतिर्भवतीति शेषः। यत्र यस्यां प्रीतौ लौकिकानां लोकसमूहानां तारामैत्रकं चक्षूराग इति वा उपचारः काव्यैं

चक्षूराग इति, तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति (द)।

> अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
> स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति ॥ १७ ॥

कुमारौ अन्योऽन्यं प्रति ।

> एतस्मिन् मसृणितराजपट्टकान्ते
> मोक्तव्याः कथमिव सायकाः शरीरे ।
> यत्प्राप्तौ मम परिरम्भणाभिलाषात्
> उन्मीलत्पुलककदम्बमङ्गमास्ते ॥ १८ ॥

---

हेतुत्वारोपः तदारोपाच्च यां प्रीतिं लोका तारामैत्रकं वा चक्षूराग इति वा वदन्तीत्यर्थः। व्याहार इति पाठे व्याहारः उक्तिः नाम्ना कथनमिति फलितार्थः। तं तारामैत्रकादिनाम्ना उपचरितं प्रेमाणम् अप्रतिसंख्येयम् अचिन्तनीयहेतुकम् अनिबन्धनं कारणहीनं स्वभावजमित्यर्थः आमनन्ति कथयन्ति लौकिका इति शेषः। ताराणाम् उभययोः जन्मतारयोर्मैत्रमेव मैत्रकम् आदरे कः। परस्परजन्मतारातो गणने यत्र मित्रातिमित्रतारकात्यत् यद्भवति तदेव प्रेमहेतुरित्यर्थः चक्षुषोः दृश्यद्रष्टृनेत्रयोः रागः अनुराग स एव वा प्रणयहेतुः तेन तद्धेतुकप्रणयस्य अनिर्वचनीयत्वं सूच्यते ।

(१७) नास्ति हेतुर्यस्य स अहेतुः हेतुं विना जातः इत्यर्थः यः पक्षे पातः प्रवणता पक्षपातः प्रणय इत्यर्थः तस्य प्रतिक्रिया विनाशचेष्टा नास्ति न सम्भवति तादृशः प्रणयः केनापि कारणेन न नश्यतीति भावः। स हि स्नेहात्मकः प्रणयरूपः तन्तुः सूत्रम् अन्तर्मर्माणि चित्तस्य अनुभवसाधनानि सूक्ष्मकोमलभङ्गुराणि तत्त्वानि सीव्यति स्वसञ्चारेण दृढं युनक्ति ।

(१८) मसृणितः चिक्कणीकृतः यो राजपट्टः मणिविशेषः तस्मिन्निव कान्ते कमनीये एतस्मिन् शरीरे कथमिव सायकाः शराः मोक्तव्याः प्रयोक्तव्याः यस्य शरीरस्य प्राप्तौ परिरम्भणस्य स्निग्धालिङ्गनस्य अभिलाषात् मम अङ्गम् उन्मीलन्तः उद्गच्छन्तः पुलका रोमाञ्चाः कदम्बं विकसितकदम्बपुष्पं यत्र तादृशमङ्गम् आस्ते वर्त्तते। यद्वा उन्मीलदुद्गच्छत् पुलककदम्बं रोमाञ्चनिचयो यस्मिं-

किन्त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना
शस्त्रेणापि हि तेन किं, न विषयो जायते यस्येदृशः।
किं वक्ष्यत्ययमेवमद्य विमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ १९ ॥

सुम। [ लवं निर्वर्ण्य सास्रमात्मगतम्। ] हृदय! किमन्यथा परिकल्पसे (ध)।

मनोरथस्य यद्बीजं तद्दैवेनादितो हतम्।
लतायां पूर्वलूनायां प्रसूनस्यागमः कुतः ॥ २० ॥

---

स्यादृशम्। उन्मीलत्पुलककदम्बमित्यस्य पूर्वसमासे उपमालङ्कारः। मन्दर्षिणी वृत्तम्।

(१९) किन्तु पश्चान्तरे आक्रान्तं धृतं कठोरम् उग्रम् अतिदुःसहमित्यर्थः तेजः शौर्य्यगर्वो येन तस्मिन् तथोक्ते अस्मिन् प्रयुक्तशस्त्रे इत्यर्थः वीरे शस्त्रं विना शस्त्रप्रयोगं विना का गतिः क उपायः नाम सम्भावनायाम्। शस्त्रप्रयोग-व्यतिरिक्तमन्यत् किमपि न कर्त्तव्यमिति भावः। अपि यस्य शस्त्रस्य ईदृशः एवम्भूतः महाविक्रमशाली पुरुष इत्यर्थः विषयः लक्ष्यो न जायेत न स्यात् तेन शस्त्रेण किं तादृशं शस्त्रं सर्वथा निष्प्रयोजनमिति भावः। अयमेव वा वीरः उद्यतेऽपि आयुधे शस्त्रे युद्धविमुखं समरपराङ्मुखं मां किं वक्ष्यति कथयिष्यति। अविदितकारणोऽयं स्नेहात् समरपराङ्मुखमपि मां सर्वथा कापुरुषं गणयिष्यतीति भावः। दारुणः तीव्रः रसः स्वादो यस्य अतिकटुरित्यर्थः वीराणां समयः आचारः, समयः शपथाचारसिद्धान्तेषु तथा धियीत्यादि मेदिनी। स्नेहक्रमं स्नेहाचारं बाधते प्रतिबध्नाति। हन्त वीरनियमेन स्निग्धेष्वपि स्नेह-प्रकाशो न सम्भवतीति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ध) परिकल्पसे तर्कयसि। कुशकालवयोरेन रामपुत्रत्वमिति शेषः।

(२०) मनोरथस्य रामात्मजरूपस्य आशाविषयस्य यत् बीजं निदानं सीता-रूपं तत् दैवेन दुर्दैवेन आदितः पूर्वमेव हतं नाशितम्। अतएव मत्परिकल्पित-स्य रामपुत्रत्वं सर्वथैव असम्भवमिति भावः। तदेव निदर्शनया समर्थयते। पूर्वलूनायां पूर्वच्छिन्नायां लतायां प्रसूनस्य कुसुमस्य फलस्य वा आगमः उद्भवः कुतः न सम्भवति एवेत्यर्थः। प्रसूनन्तु फले पुष्पे इत्यमरः। निदर्शनालङ्कारः।

चन्द्र। अवतरामि अहमार्य्य ! सुमन्त्र ! स्यन्दनात्।

सुम। तत्कस्य हेतोः (न)।

चन्द्र। यतस्तावदयं वीरपुरुषः पूजितो भवति (प) अपिच खलु आर्य्य ! क्षात्रधर्मः परिपालितो भवति (फ) न रथिनः पादचारमायोधयन्तीति शास्त्रविदः परिभाषन्ते (ब)।

सुम। [स्वगतम्।] कष्टं बतानुप्रपन्नोऽस्मि (भ)।

कथं न्याय्यमनुष्ठानं मादृशः प्रतिषेधतु।
कथं वाप्यनुजानातु साहसैकरसां क्रियाम्॥ २१॥

चन्द्र। यदा तातमिश्रा अपि पितुः प्रियसखं धर्मार्थसंशयेषु आर्य्यमेव पृच्छन्ति, तत्किमार्य्यो विमृशति (म)।

---

(न) तत् स्यन्दनावतरणम्। कस्येति सर्वनामत्वात् हेतावपि षष्ठी।

(प) पूजितः पूजनीयः पूजयितुमर्हो वा अर्हार्थे निष्ठा। तच्च भूतलेऽवस्थितस्यास्य रथावतरणादेव भविष्यतीति भावः।

(फ) रथादवतरणे कारणमाह अपिचेति अनेन क्षत्रियधर्मोऽपि पालितो भवति भविष्यतीत्यर्थः भविष्यत्सामीप्ये लट्।

(ब) यतः शास्त्रविदः पण्डिताः रथिभिः पादचारिषु शस्त्रप्रयोगो न कर्त्तव्य इति वदन्तीत्यर्थः। अतः सर्वथैव रथादवतरणमुचितमिति भावः।

(भ) अनुप्रपन्नः कर्त्तव्याकर्त्तव्यज्ञानरहितः। विपदमनुपप्रपन्न इति पाठे अनुपप्रपन्नः प्राप्तः।

(२१) मादृशः जनः कर्त्तव्याकर्त्तव्यविषये उपदेशकः इत्यर्थः न्याय्यं युक्तिसिद्धम् अनुष्ठानं कर्म पादचारिणा लवेन सह रथात् अवतीर्य्य पादचारिणः अस्य कुमारस्य युद्धमित्यर्थः कथं केन प्रकारेण निषेधतु निवारयतु इत्यर्थः अपिच कथं वा कया युक्त्या वा साहसमेव एकः केवलः रसः आस्वादं चन्द्रकेतोः प्रवृत्तिकारणमित्यर्थः यस्यां, तादृशीं क्रियाम् दुर्दृशवीरेण सह पादचारयुद्धमित्यर्थः अनुजानातु अनुमोदताम्। अनेन पादचारयुद्धमतीव विपत्करमतश्चन्द्रकेतोरिच्छासम्पादनं विधाय एतस्मिन् विपदतिरिक्तं न किमपि अन्यत् फलं पश्यामीति भावः।

(म) विमृशति विचिन्तयति। तातमिश्राणामपि पूज्यतातानामपि

सुम । आयुष्मन् ! एवं यथाधर्ममभिमन्यसे ( य ) ।

एष सांग्रामिको न्याय एष धर्मः सनातनः ।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः ॥ २२ ॥

चन्द्र । प्रतिरूपं ( र ) वचनमार्य्यस्य ।

इतिहासं पुराणञ्च धर्मप्रवचनानि च ।
भवन्त एव जानन्ति रघूणाञ्च कुलस्थितिम् ॥ २३ ॥

सुम । सर्व्वहासं परिष्वज्य ।

जातस्य ते पितुरपीन्द्रजितो निहन्तु-
र्वत्सस्य वत्स ! कति नाम दिनान्यमूनि ।

---

सन्दिग्धविषये उपदेष्टा भवान् कथमस्मिन् सामान्यप्रश्नस्य उत्तरदाने विचिकित्सते इति भावः ।

( य ) यथाधर्मं धर्मानुसारेण अभिमन्यसे युद्धं कर्त्तुमभिमतोऽसि ।

( २२ ) एष पादचारिणा सह पादचारेण संग्रामः कार्य्य इति सांग्रामिको युद्धशास्त्रसम्मतो न्यायः युक्तिः, एष सनातनः चिरन्तनः धर्मः । चिरादेनमेव धर्मं योधा अनुसरन्तीति भावः । न केवलमन्ये योधा एनमनुसरन्ति तद्वंशीयाः पूर्वपितरोऽप्येनमनुसृतवन्तः इति तत् कर्त्तुं युक्तमेवेत्याह । इयं हि रघुसिंहानां वीराणां चरित्रमेव चारित्रम् आचारः तस्य पद्धतिः पन्थाः रघूणां कुलक्रमागतः आचार इत्यर्थः । पद्धतिः—पद + हतिः ( हन् + क्ति ) नियतप्रक्रमवशात् पादक्षुण्णः मार्गः ।

( र ) प्रतिरूपं शास्त्रसङ्गतं युक्तिसङ्गतं च ।

( २३ ) तदेव दर्शयति । भवन्त एव इतिहासं भुतं पुरावृत्तं, पुराणं ग्रन्थनिबद्धप्राचीनवृत्तान्तं च धर्मसम्बन्धीनि प्रवचनानि गाथाः च यद्वा धर्मनिर्णयार्थं प्रकृष्टानि वचनानि येषु तानि धर्मशास्त्राणीत्यर्थः । जानन्ति विदन्ति तथा रघूणां रघुवंश्यानां कुलस्थितिं कुलाचारं च जानन्ति विदन्ति ।

( २४ ) हे वत्स ! इन्द्रं जितवान् इति इन्द्रजित् ( जयतेर्भूते क्विप् ) तस्य इन्द्रजितः तदाख्यरावणपुत्रस्य निहन्तुः निधनकारिणः जातस्य वत्सस्य

तस्याप्यपत्यमनुगच्छति वीरवृत्तं
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम्॥ २४॥

चन्द्र। सकष्टम्।

अप्रतिष्ठे रघुज्येष्ठे का प्रतिष्ठा कुलस्य नः।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे॥ २५॥

सुम। अहह! हृदयमर्मदारणानि एतानि चन्द्रकेतोर्वचनानि (ल)।

लवः। हन्त! मिश्रीकृतो रसक्रमो वर्त्तते।

यथेन्दावानन्दं व्रजति समुपोढ़े कुमुदिनी
तथैवास्मिन् दृष्टिर्मम, कलहकामः पुनरयम्।
झणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्वणरसः॥ २६॥

---

तजन्मवृत्तान्तस्येत्यर्थः ते पितुर्लक्ष्मणस्य अमूनि जन्मत आरभ्य वर्त्तमानक्षण-पर्य्यन्तानि कति कियत्संख्यकानि दिनानि नाम (नाम अल्पार्थसम्भावना-वाचकम्)। तस्यापि सुतरामल्पवयसः लक्ष्मणस्यापि (अपि अल्पत्वसम्भावनायाम्) अपत्यम् अल्पादल्पतरवयस्कम् इत्यर्थः वीरवृत्तं वीराचारम् अनुगच्छति अनुसरति। दिष्ट्या (आह्लादसूचकमव्ययम्) दशरथस्य कुलं प्रतिष्ठां गौरव-पदं गतं प्राप्तम्। वसन्ततिलकं वृत्तम्।

(२५) रघुज्येष्ठे रामे अप्रतिष्ठे नास्ति (पुत्त्रेण) प्रतिष्ठा वंशस्थितिर्यस्य तस्मिन् सति। सन्तानेनैव लोकानां परकाले स्थितिर्भवति। तदेव वंशरक्षणं काङ्क्षितं लोकेष्विति नः अस्माकं कुलस्य का प्रतिष्ठा न सुप्रतिष्ठेत्यर्थः। इति अनेन दुःखेन हेतुना नः अस्माकम् अपरे त्रयः पितरः पितृतुल्या भरतादय इत्यर्थः तप्यन्ते दुःखायन्ते मनस्तापं प्राप्नुवन्तीत्यर्थः।

(ल) हृदयस्य मर्मस्थानानां दारणानि विश्लेषणानि।

(२६) इन्दौ चन्द्रे समुपोढ़े समुदिते सति कुमुदिनी यथा, तथैव अस्मिन् मम दृष्टिः आनन्दं प्रीतिप्रफुल्लतां व्रजति प्राप्नोति। पुनः पक्षान्तरे झणत्कार-

चन्द्र। [ अवतरणं रूपयन्। ] आर्य्य ! सावित्रश्चन्द्रकेतुः अभिवादयते ( व )।

सुम। अजितं पुण्यमोजस्वि काकुत्स्थस्येव ते महः।
　　श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् ॥ २७ ॥

अपिच,

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽपि नन्दतु, गुरुर्यस्ते गुरूणामपि।
ऐन्द्रं वैष्णवमाग्निमारुतमथो सौपर्णमोजोऽस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥ २८ ॥

---

रूपं क्रूरं कर्कशं क्वणितं ध्वनिः यस्य तेन तथोक्तेन गुणेन झणत्कारक्रूरक्वणितेनेत्यर्थः गुञ्जत् शब्दायमानं यद् गुरु दुर्वहं धनुः तस्मिन् धृतं कृतं प्रेम अनुरागो येन स तथोक्तः अतएव विकचः आविष्कृतः विकरालः व्यापकः उल्बणरसः वीर्य्यवान् रसः वीररस इति यावत् यस्मिन् स तथोक्तः अयं मतसम्बन्धी बाहुः कलहकामः कलहं कामयते तथाभूत आस्ते इति शेषः। वीररसस्य सन्तोषव्यञ्जितप्रणयेन मिश्रणात् उल्बणतेति बोध्यम्। शिखरिणीवृत्तम्।

( व ) सावित्रः सवितृगोत्रोत्पन्नः।

( २७ ) अथ सुमन्त्रः अजितमित्यादिना श्लोकद्वयेनाशिषं प्रयुङ्क्ते। अजितं परैरनभिभूतं पुण्यं पवित्रम् ओजस्वि ऊर्जितं प्रबलमिति यावत् काकुत्स्थस्य रामस्य इव, ते तव महस्तेजः अस्तु इति शेषः। एवं शाश्वतो नित्यः वरम् अभीष्टम् न जहाति ददातीति वराहः विष्णुः श्रेयसे विजयश्रीलाभाय परिकल्पतां सम्पद्यताम्। कॢपि सम्पाद्यमाने च चतुर्थी।

( २८ ) अपिच यः सविता सूर्य्यो देवः ते तव गोत्रस्य कुलस्य पिता उद्भवहेतुः आदिपुरुष इति यावत् स समरे त्वां धिनोतु प्रीणातु असह्यतेजःप्रदानेन त्वां वर्द्धयतु इत्यर्थः। यस्ते गुरूणामपि पितॄणामपि गुरुः उपदेशकः, गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे इति शब्दार्णवः। स देवो मैत्रावरुणः मित्रावरुणयोरपत्यं वशिष्ठः त्वाम् अभिनन्दतु आशीःप्रयोगेण संवर्द्धयतु। तथा ऐन्द्रम् इन्द्रसम्बन्धि वैष्णवं विष्णुसम्बन्धि आग्निमारुतम् अग्निसम्बन्धि वायुसम्बन्धि चेत्यर्थः

लवः। कुमार! अति हि नाम शोभसे रथस्थ एव कृतं कृतमत्यादरेण (अ)।

चन्द्र। तर्हि महाभागोऽप्यन्यं रथमलङ्करोतु।

लवः। आर्य्य! प्रत्यारोपय रथोपरि राजपुत्रम्।

सुम। त्वमप्यनुरुध्यस्व चन्द्रकेतोर्वचनम्।

लवः। को विचारः स्वेषु उपकरणेषु। किन्तु अरण्यसदो वयमनभ्यस्तरथचर्य्याः (ष)।

सुम। जानासि वत्स! दर्पसौजन्ययोर्यथोचितमीरयितुम्, यदि पुनरीदृशं त्वामिच्वाको रामभद्रः पश्येत् तदा अस्य स्नेहेन हृदयमभिष्यन्देत।

लवः। मान्यः सुजनः स राजर्षिः श्रूयते। [सलज्जमिव (स)।

वयमपि न खल्वेवंप्रायाः क्रतुप्रविघातिनः
क इह च गुणैस्तं राजानं न वा बहु मन्यते।

---

सौपर्णं सुपर्णो गरुड़स्तत्सम्बन्धि एतेषां सदृशमित्यर्थः तेजः ते तव अस्तु भवतु। अपिच रामलक्ष्मणयोरिव यस्तव धनुर्ज्याघोषः स एव मन्त्रः स जयं देयादेव तुभ्यं जयं दद्यात्वेव। युद्धे रामलक्ष्मणयोरिव ते धनुषी ज्याघोषौ भवतु तयोरिव जयलाभोऽपि भवतु इति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

(अ) कृतम् अलं निष्प्रयोजनम्, आग्रहातिशयद्योतनाय द्विरुक्तम्।

(ष) स्वेषु मित्रतापन्नत्वेन भवदीयोपकरणानामपि स्वकीयतुल्यत्वात् स्वकीयेषु उपकरणेषु रणसामग्रीषु को विचार को विवेकः भवदीयरथारोहणे न दूषणमित्यर्थः। किन्त्विति पक्षान्तरावलम्बने हेतुद्योतकम्। वनवासित्वेन रथारोहणस्य अनभ्यस्तत्वान्न तदारोहणं क्रियते इत्यर्थः।

(स) सलज्जम् एवं मान्यस्यापि राजर्षेः मिथ्यावधारणात् लज्जासहितमित्युक्तम्।

(२८) ननु यदि सुजनः स राजर्षिरिति श्रुतं तर्हि कथं तस्य क्रतुविघातः

तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां
विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाऽकरोत् ॥ ३९ ॥

चन्द्र। [सस्मितम्।] किन्नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः।

लवः। अस्त्वमर्षो मा भूद्वा, एतत्तु, पृच्छामि, दान्तं हि राघवं राजानं शृणुमः, स किल नात्मना दृप्यति नाप्यस्य प्रजा ईदृश्यो जायन्ते, तत् किमस्य मनुष्या राक्षसीं वाचं वदन्ति (ह)।

---

क्रियत इत्यवाह वयमिति। वयमपि न खलु, खलु अनुनयसूचकमव्ययम्। एवंप्रायाः ईदृशाः क्रतुप्रविघातिनः यज्ञविघ्नकारिणः। यथा स राजर्षिः सुजनः तथा वयमपि सुजना न कुजनाः न वा मेध्याश्वनिरोधादिकमस्माकमभ्यस्तं कर्म येनैतत्कृतं किन्त्वत्र हेतुरन्योऽस्तीति भावः। अथ चेदेवंविधे कार्य्ये हेतुर्विजिगीषाद्वेषयोरन्यतरः सम्भवति तदुभयञ्च दुराशयत्वसूचकमित्यपेक्षायामाह क इह चेति। को वा जनः इह जगति गुणैः शौर्य्यादिभिः तं राजानं रामं न बहु मन्यते। रामस्य प्राधान्यं जगति सर्वैरेव स्वीकृतम् अतो न विजयलिप्सया अश्वोऽयं धृत इति भावः। पक्षान्तरे इह जगति को वा द्वेष्टा जनो न गुणैः तं राजानम् अबहु मन्यते क्षुद्रं मन्यते सर्व एवेत्यर्थः। यथा द्वेष्टा अबहु मन्यते वयमपि तथा अबहु मन्यामहे येन सोऽस्माकं द्वेषविषयोऽभवदिति भावः। रामस्य महत्त्वे क्षुद्रत्वे वा नोऽस्माकं नास्त्यपेक्षा किन्तु तत्कृतेन मेध्याश्वशिरोलिखनेन राजन्यापमानरूपमर्य्यादातिक्रम एव मामेवं व्यवसाययतीत्याह तदपीति। तदित्यव्ययम्। तदपि तथापि विजिगीषाद्वेषयोरन्यतराभावेऽपीत्यर्थः तुरङ्गमरक्षिणाम् अश्वरक्षकाणां रामनियोजितानामित्यर्थः। स व्याहारः अयमश्वः पताकेयमित्यादि रामानुमोदितं वचनम् अखिलानां समस्तानां क्षत्राणाम् आक्षेपेण तिरस्कारेण वीरत्वापह्नवरूपापमानेनेति यावत् हेतुना या प्रचण्डता औद्धत्यं रामस्येत्यर्थः तया हेतुना मे मम विकृतिं निष्कारणापमानितेषु राजन्यवर्गेषु पक्षपातेन मनोविकारम् अकरोत् जनयामास। अतस्तवैव चिन्त्यं को दुर्जन इति भावः। हरिणीवृत्तम्।

(ह) अमर्षः असहिष्णुता। दान्तम् अहङ्कारशून्यत्वेनेन्द्रियदमनकारिणम्। आत्मना स्वयम्। दृप्यति दर्पं करोति। ईदृश्यो दृप्ताः।

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः
सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः ॥ २० ॥

इति ह स्म तां निन्दन्ति, अथेतरामभिष्टुवन्ति ( ख )।

कामान् दुग्धे, विप्रकर्षत्यलक्ष्मीं
कीर्त्तिं सूते दुष्कृतं या हिनस्ति ।
तां चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥ २१ ॥

सुम । परिपूतस्वभावोऽयं कुमारःप्राचेतसान्तेवासी वदति अभिसम्पन्नमार्षेण ( क )।

लवः । यत् पुनश्चन्द्रकेतो ! वदसि, किन्नु भवतस्तात्-

---

( २० ) ऋषयो मन्वादयः उन्मत्तस्य दृप्तस्य च वाचं राक्षसीं वाचमित्यर्थः आहुर्वदन्ति । सा वाक् सर्वेषां सर्वप्रकाराणां वैराणां विरोधानां विघ्नानामिति यावत् योनिः कारणं, सा हि लोकस्य जनस्य निर्ऋतिः दुर्गतिमूलम् अमङ्गलहेतुरिति यावत् । ऋतिः कल्याणवर्त्मनीरिति च मेदिनी । निष्क्रान्ता ऋतेः निर्ऋतिः ।

( ख ) इति अस्मात् हेतोः । इतराम् अराक्षसीं सूनृतामित्यर्थः ।

( २१ ) या वाक् कामान् अभीष्टान् अभिलषितविषयान् दुग्धे आकर्षति आनीय ददातीत्यर्थः, अलक्ष्मीम् अनिष्टकारणं विप्रकर्षति आकृष्य दूरीकरोति, कीर्त्तिं सुख्यातिं सूते जनयति, दुष्कृतं दुष्कर्म हिनस्ति तज्जन्यफलकामनया नाशयति विफलीकरोतीत्यर्थः । अतएव धीराः पण्डिताः सूनृतां वाचं ताम् एतां वाचं सत्यां प्रियाञ्चेत्यर्थः प्रियं सत्यञ्च सूनृतमिति दर्शनात् । मङ्गलानां सकलकल्याणानां मातरं प्रसवित्रीं धेनुं कामधेनुसदृशीम् आहुः ब्रुवन्ति । शालिनीवृत्तम् ।

( क ) परिपूतः सर्वथा पवित्रः स्वभावो यस्य स तथोक्तः । प्राचेतसस्य वाल्मीकेः अन्तेवासी शिष्यः आर्षेण ऋषिकृतेन संस्कारेण शिक्षारूपेण अभिसम्पन्नं संस्कृतं सर्वथा दोषरहितं परिपूतमिति यावत् । यथाऽस्य स्वभावः परिपूतः तथाऽस्य वचोऽपीति भावः । प्राचेतसान्तेवासीति हेतुगर्भविशेषणम् ।

प्रतापोत्कर्षोऽप्यमर्ष इति, तत् पृच्छामि, किं व्यवस्थितविषयाः क्षत्रधर्मा इति ? ( ख )

सुम । नैव खलु जानासि तं देवमैक्ष्वाकं, यदेवं वदसि, तद्विरम्यतामतिप्रसङ्गात् ( ग ) ।

सैनिकानां प्रमाथेन सत्यमोजायितं त्वया ।
जामदग्न्यस्य दमने नैवं निर्वक्तुमर्हसि ॥ ३२ ॥

लवः । [ प्रहासम् । ] आर्य्य ! जामदग्न्यस्यापि दमनः स राजा, इति कोऽयमुच्चैर्वादः ।

सिद्धं ह्येतद्वाचि वीर्य्यं द्विजानां
बाह्वोर्वीर्य्यं यत्तु तत् क्षत्रियाणाम् ।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन् दान्ते का स्तुतिस्तस्य राज्ञः ॥ ३३ ॥

---

( ख ) क्षत्रधर्माः किम् ? विपूर्वात् सिनु बन्धने इत्यस्मात् भावे अच् । विषयः सम्बन्धः । व्यवस्थितः स्थिरः विषयः सम्बन्धो येषां ते तथोक्ताः भवन्तीति शेषः । क्षत्रधर्माणां प्रतापादीनां सम्बन्धः किम् ? रामे एव स्थिरः न अन्यत्र सम्भवतीत्यर्थः ।

( ग ) अतिप्रसङ्गात् अतिरिक्तप्रस्तावात् अनर्थकवाग्बाहुल्यादित्यर्थः ।

( ३२ ) सैनिकानां प्रमाथेन विक्लवीकरणेन हेतुना त्वया ओजायितम् ओजस्विवदाचरितं सत्यम् । किन्तु तेनैव हेतुनेति अर्थात् जामदग्न्यस्य त्रिभुवनैकवीरस्य परशुरामस्य दमने दर्पहारिणि विजेतरीति यावत् रामे एवम् उद्धतमित्यर्थः निर्वक्तुं कथयितुं नार्हसि ।

( ३३ ) अथ कोऽयमुच्चैर्वाद इत्यादिना परशुरामदमनेन न रामस्य पराक्रमप्रकाशः, न वा तस्य प्रशंसायोग्यत्वमिति यत् सूचितं तत्र हेतुं दर्शयति सिद्धमिति । द्विजानां ब्राह्मणानां वाचि हि वाक्ये एव वीर्य्यं बलं वाचि हीति-शब्दात् न बाह्वोरित्यर्थः एतत् सिद्धं सर्वजनप्रसिद्धं न एतत् प्रमाणान्तरप्रयोगसापेक्षमित्यर्थः । बाह्वोस्तु यद्वीर्य्यं तत् क्षत्रियाणां क्षत्रिया एव बाहुबलेन प्रसिद्धा नान्ये, इत्यपि प्रसिद्धम् । बाहुवीर्य्ये ब्राह्मणानामधिकार एव नास्तीति भावः । ब्राह्मणो जामदग्न्यः शस्त्रं गृह्णातीति शस्त्रग्राही शस्त्रमात्रग्राहीति । शस्त्र-

चन्द्र। [ सोन्माथमिव। ] आर्य्य! आर्य्य! कृतमुत्तरोत्तरेण (घ)।

कोऽप्येष सम्प्रति नवः पुरुषावतारो
वीरो न यस्य भगवान् भृगुनन्दनोऽपि।
पर्य्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितानि च यो न वेद॥ ३४॥

लवः। को हि रघुपतेश्चरितं महिमानञ्च न जानाति, यदि नाम किञ्चिद्वक्तव्यमस्ति, अथवा शान्तम् (ङ)।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु, किं वर्ण्यते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते।

---

शाहीत्यनेन बाहुबलसम्पन्नः स इति नियम्यते इति भावः। तस्मिन् दान्ते पराजिते सति तस्य राज्ञः रामस्य का स्तुतिः प्रशंसावचनम्। मालिनीवृत्तम्।

(घ) सोन्माथं सक्षोभम्। उत्तरस्य वाक्यस्य उत्तरेण प्रत्युत्तरेण च कृतम् अलम् अयोग्यत्वादीदृशवाक्यस्य उत्तरं न विधेयमिति भावः।

(३४) सम्प्रति एष कोऽपि अदृष्टपूर्वः अश्रुतपूर्वश्च नवः पुरुषावतारः जात इति शेषः। भगवान् भृगुनन्दनोऽपि यस्य न वीरो वीरशब्दवाच्यतया न गण्य इत्यर्थः। यश्च पर्य्याप्ता सम्पन्ना सप्तानां भुवनानाम् अभयस्य राक्षसादिविघ्नव्यूहविनाशनात् अभयदानस्येत्यर्थः दक्षिणा प्रतिष्ठा येभ्यः तानि तथोक्तानि पुण्यानि पवित्राणि दोषरहितानि तातस्य ज्येष्ठतातस्य रामस्य चरितानि न वेद न वेत्ति। वसन्ततिलकं वृत्तम्।

(ङ) यदि नाम यदि तु किमपि किञ्चित् वक्तव्यं निन्द्यमस्ति अथवा शान्तं तत्कीर्त्तनेनालमित्यर्थः।

(३५) वृद्धा वयोज्येष्ठाः रामादयः न विचारणीयचरिताः वृद्धत्वात् सत् असत् वा इति न विवेचनीयं चरितं येषां ते न विचारणीयचरिताः तिष्ठन्तु यथा तथा स्थगितचरिता एव भवन्तु तेषां चरित्रविचारेणालमित्यर्थः। कुत इत्याह, किं वर्ण्यते वर्ण्यमाने सति दोषबाहुल्यात्तच्चरितस्य दोषोद्घाटनमेव भविष्यतीति स्थगनमेवोचितमिति भावः। तदेव इङ्गितद्वारेण ज्ञापयति सुन्देति। सुन्दस्य तदाख्यराक्षसविशेषस्य स्त्रियाः ताड़कायाः नाम कस्याश्चित् स्वभावदुर्बलायाः प्रियसाध्व्याया अपि इत्यर्थः दमनेऽपि अखण्डं परिपूर्णं यशो येषां ते तथोक्ताः

यानि त्रीण्यकुतोभयान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३५ ॥

चन्द्र। आः तातापवादभिन्नमर्य्याद ! (च) अतिहि नाम प्रगल्भसे (छ)।

लवः। अये मय्येव भ्रुकुटीधरः संवृत्तः (ज)।

सुम। स्फुरितमनयोः क्रोधेन। तथाहि।

---

लोके जगति महान्तो हि पूज्या एव। अतिजघन्यचरिता अपीति भावः। खरस्य खराख्यराक्षसस्य आयोधने तेन सह युद्धे यानि त्रीणि अकुतोभयानि नास्ति कुतः कस्मात् भयं भयप्रकाशः येषु तानि अपराङ्मुखानि पश्चाद् देशे प्रतिनिवृत्तानि पदानि पदक्षेपाः अस्त्रपातभयेन पश्चात्प्रतिनिवृत्तपदविक्षेपा इत्यर्थः आसन् वा एवम् इन्द्रसूनोरिन्द्रपुत्रस्य बालिनः निधने वधे यत् कौशलं युद्धकार्य्यदक्षता आसीदित्यर्थः अपरेण सह युध्यमानं बालिनं प्रति प्रच्छन्नभावेन वाणक्षेपात् युद्धनीतिविरुद्धम् अतिजघन्यं यत् अशक्तिप्रकटनमित्यर्थः तत्रापि तस्मिन्नपि अपि शब्दात् तेषु सर्वेष्वित्यर्थः जनः अभिज्ञः सर्वे एव तत् सर्वे जानन्तीत्यर्थः अत एतादृशानां चरितानां वर्णनयाऽलमिति भावः। (पूर्वार्द्धात् परम्) हुं वर्त्तते इति अधिकपाठे, हुमित्यव्ययं स्मरणे। सत्यं तेषाम् अमाहात्म्यसूचकचरितं वर्त्तते इत्येतदर्थं स्मारणेन दर्शयति सुन्दीत्यादि। शार्दूलविक्रीड़ितं वृत्तम्। अत्र रामायणस्य आर० ३० सर्गवाक्यम्।

विकलः स कृतो बाणैः खरो रामेण संयुगे।
मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद् द्रुतम् ॥
तमापतन्तं संक्रुद्धं कृतास्त्रो रुधिराप्लुतम्।
अपासर्पद् द्वित्रिपदं किञ्चित्त्वरितविक्रमः ॥

(च) तातस्य ज्येष्ठतातस्य रामस्य अपवादेन निन्दया भिन्ना भग्ना अतिक्रान्तेति यावत् मर्य्यादा सदाचारपद्धतिर्येन स तथोक्तस्तत्सम्बोधनम्।

(छ) प्रगल्भसे तदाक्षेपेणात्मनि अतीव गर्वं दर्शयसीत्यर्थः।

(ज) भ्रुवोः कुटी भ्रुकुटी भ्रुभङ्गी तां धरतीति भ्रुकुटीधरः सञ्जातकोपः संवृत्तः सञ्जातः। वीर्य्यादिना रामस्य अल्पत्वसूचनात् मयि कोपप्रकटनमनुचितमिति भावः।

चूड़ामण्डलबन्धनं तरलयत्याकूतजो वेपथुः
किञ्चित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः ।
धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रं भ्रुवो-
श्चन्द्रस्योत्कटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥३६॥

कुमारौ । तदितो विमर्दक्षमां (ख) भूमिमवतरावः ।

इति निष्क्रान्ताः सर्वे ।

इति कुमारविक्रमो नाम पञ्चमोऽङ्कः ।

---

## षष्ठोऽङ्कः ।

ततः प्रविशति (क) विमानोज्ज्वलं विद्याधरमिथुनम् ।

विद्याधरः । अहो खलु अनयोर्विकर्त्तनकुलकुमारयोः अकाण्ड-

---

(३६) आकूतं प्रतिद्वन्द्विपराभवेच्छा तस्मात् जायते यः तथोक्तः क्रोधोत्पन्न इत्यर्थः वेपथुः चूड़ामण्डलस्य पञ्चचूड़त्वात् शिखासमूहस्य बन्धनं बद्धं शिखामण्डलमित्यर्थः तरलयति चञ्चलीकरोति । स्वयं स्वभावतः कोकनदच्छदस्य रक्तोत्पलदलस्य किञ्चित् सदृशे ईषल्लोहिते इत्यर्थः नेत्रे रज्यतः क्रोधोद्रेकात् कोकनददलवत् सम्पूर्णरक्तवर्णतामाप्नुतः । वक्त्रं मुखम् अकाण्डे अकस्मात् ताण्डवितयोः ऊर्द्धाधःप्रचलितयोः भ्रुवोर्भङ्गेन कौटिल्येन उत्कटं व्यक्तं लाञ्छनं कलङ्को यस्य तथोक्तस्य चन्द्रस्य, उद्भ्रान्तौ उपरि भ्रमन्तौ भृङ्गौ भ्रमरौ यस्य तथोक्तस्य कमलस्य च कान्तिं धत्ते धारयति । व्यक्तक्रोधलक्षणत्वात् इत्थंभूतं तस्य मुखं सलाञ्छनचन्द्रवत् चञ्चलभ्रमरपद्मवच्च शोभते इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ख) विमर्दाय रणव्यापाराय क्षमां योग्यां युद्धोपयुक्तामित्यर्थः ।

---

(क) विमानोज्ज्वलं विमानशोभितं व्योमयानारूढ़मित्यर्थः । विद्याधरमिथुनं स्त्रीपुंरूपविद्याधरद्वयम् । विमानोज्ज्वलेनेत्यपि पाठः करणे तृतीया ।

कलहप्रचण्डयोः उद्योतितच्चात्रलक्ष्मीकाणि अद्भुतोद्भ्रान्त-देवासुराणि विक्रान्तचरितानि (ख)।

तथाहि प्रिये! पश्य पश्य।

झणज्झणितकङ्कणक्वणितकिङ्किणीकं धनु-
र्ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम्।
वितत्य किरतोः शरानविरतस्फुरच्चूड़योः-
र्विचित्रमभिवर्द्धते भुवनभीममायोधनम्॥ १॥

विजृम्भितञ्च दिव्यस्य मङ्गलाय द्वयोरपि।
स्तनयित्नोरिवामन्द्रं दुन्दुभेर्दुन्दुमायितम्॥ २॥

तत् प्रवर्त्त्यताम् अनयोः प्रवीरयोः अनवरतम् अविरललु-

---

(ख) विकर्त्तनकुलकुमारयोः सूर्य्यवंशबालकयोः चन्द्रकेतुलवयोरित्यर्थः। अकाण्डकलहप्रचण्डयोः आकस्मिकविवादभीषणयोः। उद्योतिता प्रकाशिता चात्रलक्ष्मीः चत्रियवीर्य्यादिकमित्यर्थः, यैः तानि। अद्भुतेन विस्मयरसेन उद्भ्रान्ता विमूढ़ा देवासुराः सुरदानवा येभ्यस्तानि। विक्रान्तचरितानि, विक्रमसूचकानि शस्त्रकार्य्याणीत्यर्थः।

(१) झणदिति। झणज्झणितानि झणज्झणेति शब्दं कुर्वन्ति यानि कङ्कणानि भूषणविशेषाः तानीव क्वणिताः शब्दायमानाः किङ्किण्यः चुद्रघण्टिका यत्र तत्, तथा गुणाटनीभ्यां कृतः करालः कोलाहलः शब्दविशेषः यस्य तत्। अतएव ध्वनत् शब्दायमानं गुरु अन्यदुर्वहं धनुर्हस्तेन कृत्वेत्यर्थः शरान् बाणान् किरतोः वर्षतोः निरन्तरं चिपतोः इत्यर्थः। अविरतम् अविश्रान्तं यथा तथा स्फुरन्त्यः शोभमानाः चूड़ाः शिखाः ययोस्तादृशयोः कुमारयोरिति शेषः, भुवनभीमं सर्वलोकभयङ्करं, विचित्रम् अपूर्व्वदृष्टत्वादाश्चर्य्यजनकम् आयोधनं युद्धम् अभिवर्द्धते उपचीयते। पृथ्वीवृत्तम्।

(२) विजृम्भितमिति। द्वयोरपि चन्द्रकेतुलवयोः, मङ्गलाय कल्याणाय रणोत्साहवर्द्धनायेत्यर्थः, स्तनयित्नोः मेघस्येव मेघतुल्यगम्भीररवकारिण इत्यर्थः। दिव्यस्य स्वर्ग्यस्य दुन्दुभेर्वाद्यविशेषस्य आमन्द्रमतिगम्भीरं दुन्दुमायितं दुन्दुमेति ध्वनिः विजृम्भितं चतुर्दिक्षु व्याप्तम्।

लितविकचकनककमलकमनीयसंहतिः अमरतरुतरुणमुकुल-निकरमकरन्दसुन्दरः पुष्पनिपातः (ग)।

विद्याधरी। ता किंत्ति उण अआण्डविप्फुरिदतड़िच्छड़ाकड़ारं विअ अम्बरं झत्ति संवुत्तं (१) (घ)।

विद्याधरः। तत्किन्नु खलु अद्य *।

त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्त्तण्डज्योतिरुज्ज्वलः।
पुटभेदो ललाटस्थनीललोहितचक्षुषः॥ २॥

विचिन्त्य। आं ज्ञातं, वत्सेन चन्द्रकेतुना प्रयुक्तमस्त्रमाग्नेयं, यस्यायमग्निच्छटासम्पातः। सम्प्रति हि,

---

(१) तत् किमिति पुनरकाण्डविस्फुरिततड़िच्छटाकड़ारमिव अम्बरं झटिति संवृत्तम्।

---

(ग) अविरलेत्यादि। अविरलं निरन्तरं यथा तथा लुलितानां पतितानां विकचकनककमलानां कमनीया मनोहरा सन्ततिः विस्तृतिः यस्मिन् स तथोक्तः, अमरतरूणां देवपादपानां मन्दारादीनां ये तरुणमुकुलनिकरा नवोद्भिन्नकलिकासमूहास्तेषां मकरन्दैः नानाविधैः रसैः मिश्रितरसगन्धैरित्यर्थः सुन्दरः सुरभिः।

(घ) अकाण्डे अकस्मात् विस्फूरितया प्रचरन्त्या तड़िच्छटया विद्युद्दीप्त्या कड़ारं पिङ्गलवर्णम्।

* तत् किं नु खलु अद्य। किं नु इति वितर्के खलु प्रसिद्धार्थस्य द्योतनार्थम्। यत् प्रलयकाले महाकालरूपी रुद्रः सृष्टिनाशाय जगद्दाहकं तृतीयं अग्निरूपं नेत्रमुन्मीलयिष्यतीति प्रवादो वर्त्तते, तत् किं तत् तादृशप्रसिद्धार्थस्य द्योतनार्थं जातं तदित्यव्ययस्यार्थः।

(२) त्वष्टुः विश्वकर्मण इदमिति त्वाष्ट्रं तस्य त्वष्टृसम्बन्धिनः यन्त्रस्य शाणविशेषस्य भ्रमिरावर्त्तनं तेन भ्रान्तस्य पुनः पुनरुल्लिखनात् विद्युदिव चतुर्दिक्षु प्रसृतस्य मार्त्तण्डस्य सूर्य्यस्य यद् ज्योतिः तदिव उज्ज्वलः, ललाटस्थस्य नीललोहितचक्षुषः हरनेत्रस्य तृतीयस्येत्यर्थः पुटयोरावरणयोर्भेदः विघटनम् उन्मीलनमित्यर्थः।

अवदग्धकर्वुरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः।
दधति ध्वजांशुकपटाञ्चलेष्विमाः
क्षणकुङ्कुमच्छुरणविभ्रमं शिखाः॥ ४॥

आश्चर्यं, प्रवृत्त एवायम् उच्चण्डवज्रखण्डावस्फोटपटुः उत्सर्पिस्फुलिङ्गगुरुः उत्तालतुमुललेलिहानज्वालासम्भारभैरवो भगवान् उषर्बुधः (ङ)।

प्रचण्डश्चास्य सर्वतः सन्तापः तत्प्रियामङ्केनाच्छाद्य दूरमपसरामि। [तथा करोति।]

---

(४) अवदग्धाः सुष्टा अतएव कर्वुरिताः विचित्रिताः केतवः ध्वजपटाः चामराणि च येषां तैः तथोक्तैः आरब्धदाहैरित्यर्थः विमानमण्डलैः व्योमयानश्रेणिभिः अपयातमेव पलायितमेव। ध्वजांशुकपटानां ध्वजदण्डांशुकानाम् अञ्चलेषु प्रान्तेषु इमाः शिखाः अनलार्चिषः क्षणं क्षणे क्षणे कुङ्कुमेन तदाख्यलोहितकाष्ठगुण्डिकया यत् छुरणं रञ्जनं तस्य विभ्रमं भ्रान्तिं दधति जनयन्ति। यद्वा इमाः शिखाः नायिकाभूताः ध्वजानां नायकभूतानां पटाञ्चलेषु वस्त्रप्रान्तेषु क्षणे उत्सवसमये यत् कुङ्कुमविच्छुरणं फल्गुरञ्जनं तज्जन्यः यः विभ्रमः ध्वजानां शोभा तं दधति कुर्वन्ति। यथा वसन्तोत्सवसमये पलायितानामपि जनानां वस्त्रेषु रागः क्रियते तद्वदिमाभिः शिखाभिः ध्वजानां चलितानामपि अंशुकेषु रागः क्रियते इति भावः। मञ्जुभाषिणीवृत्तम्।

(ङ) उच्चण्डः अतिवेगवान्, वज्रखण्डानां हीरकाणाम् अवस्फोटे विदारणे पटुश्च। उत्सर्पिभिः ऊर्द्ध्वं गतैः स्फुलिङ्गैः गुरुः उच्चतरः, पटुरवस्फुलिङ्ग इति पाठे उच्चण्डाः अतिकठिनाः ये वज्रखण्डाः हीरकखण्डास्तेषामवस्फोटेन जाता इव पटुः अतिविपुलः यो रवः स्फुलिङ्गश्च तैर्गुरुरतिदुःसहः। पटुतरस्फुलिङ्गविक्रान्तिरिति पाठे—उच्चण्डः अतिभीषणः यो वज्रखण्डस्य कुलिशस्य अवस्फोटः दिशो विभिद्य गमनम् आविर्भावः आविर्भूतवज्रखण्ड इत्यर्थः स एव पटुतरा अतिविशाला: स्फुलिङ्गा अग्निकणा एव विक्रान्तिर्यस्य स तथोक्तः वज्रखण्डसदृशस्फुलिङ्गवानित्यर्थः। एष पाठ एव श्रेयानिति मन्यामहे। उत्तालेन अत्युन्नतेन तुमुलेन सङ्कुलेन लेलिहानेन उत्सर्पतेत्यर्थः ज्वालासम्भारेण शिखासमूहेन भैरवो भीषणः अयं भगवान् उषर्बुधः वह्निः प्रवृत्त एव।

विद्याधरी । दिट्ठिआ एदेण विमलमोत्तिअफलसीदल-सिणिद्धमसिणसोवाणमंसलेण णाहदेहप्फंसेण आणन्दमन्द-मुउलिदघुण्णन्तलोअणाए अन्तरिदो ज्जेव सन्दावो (२) (च) ।

विद्याधरः । अयि किमत्र मया कृतम्, अथवा

अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ५ ॥

विद्याधरी । कहमविरलविलोलघुण्णन्तविज्जुल्लदाविला-समण्डिदेहिं मत्तमोरकण्ठसामलेहिं ओत्थरीअदि णहत्थलं जलहरेहिं ( ३ ) ( छ ) ।

विद्याधरः । हन्त हन्त कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खलु अयम् । कथमविरलप्रवृत्तवारिधारासहस्रसम्पातैः प्रशान्तं पावकास्त्रम् ।

विद्याधरी । पिअं मे पिअं मे ( ४ ) ।

विद्याधरः । हन्त हन्त भो भोः सर्वमतिमात्रं दोषाय

---

( २ ) दिष्ट्या एतेन विमलमौक्तिकफलशीतलस्निग्धमसृणसोपानमांसलेन नाथदेहस्पर्शेन आनन्दमन्दमुकुलितघूर्णल्लोचनाया अन्तरित एव सन्तापः ।

( ३ ) कथमविरलविलोलघूर्णद्विद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठश्यामलैरास्तीर्य्यते नभस्तलं जलधरैः ।

( ४ ) प्रियं मे प्रियं मे ।

---

( च ) विमलं यत् मौक्तिकफलं तदिव शीतलं स्निग्धं कोमलं मसृणं चिक्कणं च यत् सोपानं तदिव मांसलं कोमलं तेन तथा आनन्देन स्पर्शजनितसुखेन मन्दम् ईषत् यथा तथा मुकुलिते निमीलिते घूर्णन्ती च लोचने यस्यास्तस्याः तथोक्तायाः ममेति शेषः ।

( ५ ) द्वितीयेऽङ्के ६५ पृष्ठायाम् एषः श्लोकः विहृतः ।

( छ ) अविरलं घनं विलोलम् अतिशयचञ्चलं च यथा तथा घूर्णन्त्या विसर्पन्त्या विद्युल्लतायाः विलासेन आविर्भावतिरोभावेनेत्यर्थः मण्डितैः भूषितैः । आस्तीर्य्यते व्याप्यते ।

यत् प्रबलवातावलिक्षोभगम्भीरगुणगुणायमानमेघमेदुरान्धकारनीरन्ध्रनिबद्धम् एकवारविश्वग्रसनविकटविकरालकालकण्ठमुखकन्दरविवर्त्तमानमिव युगान्तयोगनिद्रानिरुद्धसर्वद्वारनारायणोदरनिविष्टमिव भूतजातं प्रवेपते (ज)।

साधु वत्स चन्द्रकेतो! साधु, स्थाने वायव्यास्त्रमीरितम् (झ)।

यतः, विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्त्तानां क्वापि विप्रलयः कृतः॥ ६॥

विद्याधरी। णाह! को दाणिं एसो ससम्भमुक्खित्तक-

---

(ज) प्रबलवातावलिक्षोभेण प्रचण्डवात्याभिघातजनितवेगेन गम्भीरं यथा तथा गुणगुणायमानैः गुणगुणेति शब्दायमानैः मेघैः मेदुरं सान्द्रं गाढ़मिति यावत् यत् अन्धकारं तेन नीरन्ध्रं निरवकाशं यथा तथा निबद्धम् आच्छादितं भूतजातं जीवसमूहः एकेनैव वारेण निमेषादिचेष्टापरिमितसमयेन विश्वग्रसनाय जगद्ग्रासाय विकटः विजृम्भितः विस्तृत इत्यर्थः विकरालः अतिभीषणः यः कालकण्ठस्य नीलकण्ठस्य महादेवस्य मुखकन्दरः मुखविवरं तस्मिन् विवर्त्तमानं चेष्टमानमिव युगान्ते प्रलयकाले यो योगः सर्वविषयेभ्यः अन्तःकरणवृत्तेर्निरोधस्तद्रूपा या निद्रा तया निरुद्धानि निबद्धानि सर्वाणि द्वाराणि इन्द्रियाणि येन तथोक्तस्य नारायणस्य जगत्स्रष्टुरुदरे गर्भे निविष्टं प्रविष्टमिव सत् प्रवेपते प्रकम्पते। अनेन लक्षणेन मरणमासन्नं दृष्ट्वा सर्वं प्राणिजातं भयेन कम्पते इत्यर्थः।

(झ) ईरितं प्रेरितं प्रयुक्तमिति यावत्।

(६) विद्याकल्पेन ब्रह्मतत्त्वज्ञानसदृशेन मरुता चन्द्रकेतुनिक्षिप्तवायव्यास्त्रप्रवर्त्तितवायुना, विवर्त्तानां जगत्प्रपञ्चानाम् आभासमानानां जगतामित्यर्थः ब्रह्मणि इव, भूयसां बहुलानाम् अपि मेघानां लवप्रयुक्तवारुणास्त्रसम्भूतानामित्यर्थः क्वापि विप्रलयः संहारः कृतः। एकं ब्रह्मैवास्ति, यद् जगद्रूपेण प्रतीयमानं भवति वस्तुतस्तन्नास्त्येव, ब्रह्मण्येव तथा भ्रमो भवति। स च भ्रमः यदा ब्रह्मज्ञानं जायते तदा नश्यति, इति वैदान्तिकमतम्। तदेवाश्रित्य एषः श्लोकः।

रब्भमिदपट्टकञ्चलो दूरदोज्जेव महुरवअणपड़िसिद्धजुज्झवा-वारो एदाणं कुमाराणं अन्तरम्मि विमाणवरं ओदरावेदि (५)(ञ)।

विद्याधरः। [दृष्ट्वा] एष शम्बूकवधात् प्रतिनिवृत्तो रघुपतिः।

शब्दं महापुरुषसंविहितं निशम्य
तद्गौरवात् समुपसंहृतसम्प्रहारः।
शान्तो लवः, प्रणत एव च चन्द्रकेतुः,
कल्याणमस्तु सुतसङ्गमनेन राज्ञः॥ ७॥

इति निष्क्रान्तौ, विष्कम्भकः।

ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च।

रामः। पुष्पकादवतरन्।

दिनकरकुलचन्द्र! चन्द्रकेतो!
सरभसमेहि दृढं परिष्वजस्व।

---

(५) नाथ! क इदानीमेष ससम्भ्रमोत्क्षिप्तकरभ्रमितपट्टकाञ्चलो दूरत एव मधुरवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोः अन्तरे विमानवरमवतारयति।

---

(ञ) ससम्भ्रमं सावेगम् उत्क्षिप्तेन उन्नमितेन करेण हस्तेन भ्रमितः पट्टकस्य उत्तरीयस्य अञ्चलः प्रान्तभागः येन तथोक्तः। ओत्तञ्चलो इति पाठे स एवार्थः।

(७) महापुरुषेण रामेण संविहितम् उच्चारितं शब्दं युद्धान्निवर्त्तस्व इत्येवं-रूपं वाक्यमित्यर्थः निशम्य श्रुत्वा तद्गौरवात् तस्य रामस्य महापुरुषलक्षणस्य गौरवात् गुरुत्वात् पूज्यत्वात् तद्वाक्यस्य अनुलङ्घ्यत्वादित्यर्थः समुपसंहृतः परि-हृत इत्यर्थः सम्प्रहारः बाणादिप्रयोगः येन तथोक्तः सन् लवः चन्द्रकेतुश्च शान्तः शमं गतः बाणादिकं विमुच्य युद्धान्निवृत्त इत्यर्थः प्रणत एव प्रणामक्रियायां रतश्च बभूवेति शेषः। अधुना सुतसङ्गमेन पुत्रसमागमेन राज्ञः रामस्य कल्याण-मस्तु शुभं भवतु। वसन्ततिलकं वृत्तम्।

(८) हे दिनकरकुलस्य सूर्य्यवंशस्य चन्द्र! आह्लादकत्वात् चन्द्रतुल्य इत्यर्थः चन्द्रकेतो! सरभसं सहर्षं (रभसो वेगहर्षयोरिति विश्वः) अथवा

तुहिनशकलशीतलैस्तवाङ्गैः
शममुपयातु ममापि चित्तदाहः ॥ ८ ॥

चन्द्र। अभिवादये।

रामः। [ उत्थाय सस्नेहास्रं परिष्वज्य। ] अपि नाम कुशलं तव दिव्यास्त्रधरदेहस्य ?

चन्द्र। कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य अभ्युदयेन। तद्विज्ञापयामि, मामिव अविशेषेण मत्तः शिवतरेण चक्षुषा पश्यतु अमुं महावीरप्रकाण्डं तातः ( ट )।

रामः। [ लवं निरूप्य। ] दिष्ट्या अतिकल्याणाकृतिरयं वयस्यो वत्सस्य ( ठ )।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोषस्य गुप्त्यै।
सामर्थ्यानामिव समुदयः सञ्चयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ९ ॥

लवः। अहो पुण्यानुभावदर्शनोऽयं महापुरुषः।

---

सरभसं द्रुतमित्यर्थः एहि आगच्छ। दृढं गाढं यथा तथा परिष्वजस्व आलिङ्ग। तुहिनानां शकलैः खण्डैः इव शीतलैस्तव अङ्गैः मम चित्तदाहः सीताविरहजनितः तथा तदपत्यासम्भवादिजनितश्च मनस्तापः शमं शान्तिम् उपयातु आप्नोतु। पुष्पिताग्रावृत्तम्।

( ट ) शिवतरेण शुभतरेण समधिकस्नेहवतेत्यर्थः महावीरप्रकाण्डं महावीररूपं प्रशस्तपदार्थम्।

( ठ ) कल्याणी मधुरा आकृतिर्यस्य स तथोक्तः।

( ९ ) लोकान् जनान् त्रातुं विपदो रक्षितुं कायवान् मूर्त्तिमान् परिणतः भूतः अस्त्रवेदः अस्त्रविद्या इव ब्रह्मकोषस्य ब्रह्माण्डस्य गुप्त्यै रक्षणाय तनुं देहं श्रितः मूर्त्तिमान् इत्यर्थः क्षात्रो धर्मः इव सामर्थ्यानां वीर्य्यादीनां समुदयः समवाय इव गुणानां दयादाक्षिण्यादीनां सञ्चयः समष्टिरिव जगतां पुण्यनिर्माणराशिः पुण्यरूपपदार्थसमूहः आविर्भूय मूर्त्तिमाश्रित्य इव स्थितः प्रवर्त्तते इत्यर्थः। इवचतुष्टयमुत्प्रेक्षायाम्। सा चेह क्रियोत्प्रेक्षा। मन्दाक्रान्ता वृत्तम्।

आश्वासस्नेहभक्तीनामेकमालम्बनं महत् ।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्त्तिसञ्चरः ॥ १० ॥

आश्चर्यम् ।

विरोधो विश्रान्तः, प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति, विनयः प्रह्वयति माम् ।
झटित्यस्मिन् दृष्टे किमपि परवानस्मि, यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ ११ ॥

रामः । तत् किमेकपद एव दुःखविश्रामं ददाति उपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम्, अथवा स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत् ( ड )।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।

---

( १० ) आश्वासः विपन्नेभ्यः अभयदानं स्नेहः वात्सल्यं भक्तिः पूज्येषु अनुरागः तासामेकमद्वितीयं प्रधानमित्यर्थः । एके मुख्यान्यकेवला इत्यमरः । आलम्बनमाधारः, प्रकृष्टस्य पूर्णस्य धर्मस्य मूर्त्या देहेन सञ्चरतीति मूर्त्तिसञ्चरः मूर्त्तिमान् प्रसादः पवित्रता मूर्त्तिमान् पवित्रो धर्म इवेत्यर्थः । उत्प्रेक्षालङ्कारः ।

( ११ ) अस्मिन् महापुरुषे दृष्टे सति झटिति सहसा विरोधः युद्धानुरागः विश्रान्तः, निर्वृत्या स्वच्छन्दसुखेन घनः सान्द्रः रसः सुखपूर्णः शान्तिरस इत्यर्थः प्रसरति प्रवहति तत् युद्धकालजातम् औद्धत्यम् उग्रता क्वापि कुत्रापि व्रजति गच्छति अधुना तत् सर्वथैव नास्ति इत्यर्थः । विनयः भक्तिः मां प्रह्वयति नमयति । किमिव केनेव हेतुना परवान् पराधीनः अस्मि अकस्मात् आत्मा अस्य महापुरुषस्य अधीनो भवतीत्यर्थः । अथवा तीर्थानां गुरूणामिव अथवा तीर्थानां परमेश्वरमाहात्म्यसूचकानाम् अद्भुतपदार्थवतां स्थानानामिव महतां महापुरुषाणां महार्घः महामान्यः कोऽपि अनिर्वचनीयस्वरूपः अतिशयः उत्कर्षो वर्त्तते इति शेषः । शिखरिणी वृत्तम् ।

( ड ) उपस्नेहयति स्नेहमुत्पादयति । स्नेहः निमित्तस्य सव्यपेक्षः निमित्तसापेक्षः, व्यपेक्षया सह वर्त्तमानः इति वदन्ति तत् विप्रतिषिद्धं निमित्तं विना स्नेहप्रवृत्त्या हेतुना निरस्तमिति भावः । तदेव द्रढयति आन्तर इति ।

विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १२ ॥

लवः। चन्द्रकेतो! क एते।

चन्द्र। प्रियवयस्य! ननु तातपादा एते।

लवः। ममापि तर्हि धर्मतस्तथैव, यतः प्रियवयस्य इत्यात्थ, किन्तु चत्वारः खलु भवतामेवंव्यपदेशभागिनः तत्र भवन्तो रामायणकथापुरुषाः तद्विशेषं ब्रूहि (ढ)।

चन्द्र। ननु ज्येष्ठतातपादा इति अवेहि।

लवः। [सोल्लासम्।] कथं रघुनाथ एषः, दिष्ट्या सुप्रभातमद्य, यदयं देवो दृष्टः। [सविनयकौतुकं निर्वर्ण्य।] तात! प्राचेतसान्तेवासी लवोऽभिवादयते (ण)।

रामः। [सस्नेहम्।] आयुष्मन् एह्येहि। [सस्नेहं परिष्वज्य।] अयि वत्स! कृतं कृतमतिविनयेन, अनेकवारमपरिश्लथं परिष्वजस्व (त)।

---

(१२) आन्तरः परस्परस्य अन्तःकरणवर्त्ती कोऽपि अज्ञात इत्यर्थः हेतुः पदार्थान् मनुष्यादीन् व्यतिषजति सङ्गच्छते। अन्तःकरणवृत्तिः कोऽपि धर्मः परस्परं बध्नातीत्यर्थः। तत् बन्धनमेव प्रीतिः अथवा अन्तर्वर्त्ती वस्तुधर्म एव प्रीतेरुत्पादक इति भावः। प्रीतयः स्नेहा न खलु बहिरुपाधीन् बाह्यधर्मान् अङ्गसौष्ठवादीन् आश्रयन्ते, न तान् आश्रित्य प्रवर्त्तन्ते इत्यर्थः। तदेव सामान्यमर्थं विशेषार्थद्वयेन द्रढयति। हि तथाहि पतङ्गस्य सूर्य्यस्य उदये पुण्डरीकं पद्मं विकसति, च अपिच हिमरश्मौ चन्द्रे उद्गते सति चन्द्रकान्तो द्रवति। उभयत्रान्तर्वर्त्तिधर्मस्यैवानुरागहेतुत्वं यथा तथा अत्रापीति भावः। अर्थान्तरन्यासः। मालिनी वृत्तम्।

(ढ) तथैव तातपादा एव! एवं व्यपदेशभागिनः, व्यपदिश्यते संज्ञायते अनेनेति व्यपदेशः सम्बन्धवाचकपदं तं भजन्तीति तथोक्ताः तातपादपदार्हाः।

(ण) अन्ते समीपे पठनार्थं वसतीति अन्तेवासी शिष्यः।

(त) अपरिश्लथम् अशिथिलं गाढमिति यावत्।

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः।
नन्दयति चन्द्रचन्दननिष्यन्दजड़स्तव स्पर्शः ॥ १३ ॥

लवः। [ स्वगतम्। ] ईदृशोऽस्मादृशान् प्रति अमीषामकारणस्नेहः, मया पुनरेभ्य एव अभिद्रुग्धमज्ञेन, यदायुधपरिग्रहं यावत् अत्यारूढ़ो दुर्योगः। [ प्रकाशम्। ] मृष्यन्तु इदानीं लवस्य बालिशतां तातपादाः ( थ )।

रामः। किमपराद्धं वत्सेन।

चन्द्र। अश्वानुयात्रिकेभ्यः तातप्रतापाविष्करणमुपश्रुत्य वीरायितम् अनेन ( द )।

रामः। ननु अयमलङ्कारः क्षत्त्रस्य।

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयग्रावा निकृत इव तेजांसि वमति ॥ १४॥

---

( १३ ) परिणतं प्रस्फुरितं कठोरं सर्वाङ्गसम्पूर्णं यत् पुष्करं पद्मं तस्य यो गर्भच्छदः अन्तर्दलं तदिव पीनः स्थूलः कोमल इत्यर्थः मसृणः स्निग्धः सुकुमारः अभिनवस्य चन्द्रस्य चन्दनस्य च यो निष्यन्दः रसः स इव जड़ः शीतलः तव स्पर्शः आलिङ्गनजन्यः अनुभवः नन्दयति मां प्रीणाति। आर्य्या जातिः।

( थ ) अभिद्रुग्धं विद्विष्टम्। एभ्य इति द्रुहयोगे उपसृष्टत्वेऽपि बाहुलकात् चतुर्थी। आयुधपरिग्रहमिति यावद्योगे द्वितीया। दुर्योगः दुःखकरः योगः घटना संग्राम इत्यर्थः। अध्यारूढ़ः उच्चैर्गतः एतावानधिक इत्यर्थः। बालिशतामज्ञताम्। अजानता मयेदं कृतमिति मे क्षमस्वेति भावः।

( द ) वीरायितं वीरैरिव आचरितम्।

( १४ ) तेजस्वी जनः अपरेषां जनानां प्रसृतम् उद्धतं तेजः न प्रसहते। प्रकृतिनियतत्वात् प्रकृत्या नियन्त्रितत्वात् स्वभावनिबद्धत्वादित्यर्थः न कृतकः न कृत्रिमः स्वो भावः स्वभावधर्मं इत्यर्थः। इममेवार्थमर्थान्तरन्यासेन द्रढ़यति मयूखैरिति। तन्नो चेत् देवो दिनकरः सूर्यः मयूखैः किरणैः यदि यदा अश्रान्तम्

चन्द्र। तात! अमर्षोऽप्यस्य शोभते वीरस्य, पश्यतु हि तातः प्रियवयस्यविनियुक्तजृम्भकास्त्रनिष्कम्पस्तम्भितानि सर्वतः सैन्यानि।

रामः। [विलोक्य।] वत्स लव! संह्रियन्तामस्त्राणि, त्वमपि चन्द्रकेतो! निर्व्यापारविलम्बितानि (ध) सान्त्वय बलानि।

लवः। यथा आज्ञापयति तातः। [इति प्रणिधानं (न) नाटयति।]

चन्द्र। यथादिष्टम्। [इति निष्क्रान्तः।]

लवः। प्रशान्तमस्त्रम्।

रामः। वत्स! सरहस्यप्रयोगसंहरणानि अस्त्राणि आम्नायवन्ति (प)।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्राः शरदस्तपांसि।

---

अविरतं तपति तापयति तदा आग्नेयग्रावा सूर्य्यकान्तमणिः किं कथं निकृत इव तिरस्कृत इव तेजांसि अग्नीन् वमति उद्गिरति। तेजस्विस्वभावादेव, तत्र नान्यत् कारणमस्तीति भावः। अत्र सूर्य्यकान्तरूपतेजस्विविशेषेण तेजस्विजाति-रूपसामान्यार्थस्य समर्थनात् विशेषेण सामान्यसमर्थनरूपोऽयमर्थान्तरन्यासः। शिखरिणी वृत्तम्।

(ध) व्यापारस्याभावः निर्व्यापारं निश्चेष्टता तेन हेतुना विलम्बितानि लम्बितानि।

(न) प्रणिधानं समाधिम्।

(प) रहस्यं मन्त्रः तेन सह वर्त्तमानः मन्त्रोच्चारणसहकृत इत्यर्थः प्रयोगः तस्य क्षेपणं संहरणं पुनःप्रत्याकर्षणं च येषां तानि तथोक्तानि अस्त्राणि आम्नाय-वन्ति उपदिशन्ति गुरूपदेशात् शिक्षासापेक्षाणीत्यर्थः विना गुरूपदेशं न तादृशा-नामधिगमः सम्भवतीति भावः।

एतान्यपश्यन् गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

अथैतन्मन्त्रपारायणोपनिषदं (फ) भगवान् कृशाश्वः परःसहस्रपरिवत्सरान्तेवासिने कौशिकाय विश्वामित्राय प्रोवाच, स तु भगवान् मह्यमित्येष तु पूर्वानुक्रमः। कुमारस्य पुनः कुतः सम्प्रदाय इति पृच्छामि ।

लवः। स्वतःप्रकाशानि आवयोरस्त्राणि ।

रामः। [विचिन्त्य।] प्रकृष्टपुण्यपरिपाकोपादानः कोऽपि महिमा स्यात्, द्विवचनन्तु कथम् (ब)।

लवः। भ्रातरौ आवां यमजौ ।

रामः। स तर्हि द्वितीयः क्व ।

[नेपथ्ये।] भाण्डायन! भाण्डायन!

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ ? सखे! तथेति ।
अद्यास्तमेतु भुवनेष्वधिराजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥ १६ ॥

---

(१५) एषः श्लोकः पूर्वं प्रथमेऽङ्के १८ पृ० व्याख्यातः ।

(फ) मन्त्राणां पारायणं समग्रमन्त्र इत्यर्थः तद्रूपा या उपनिषत् निगूढविद्या, एषा मन्त्रपारायणरूपा उपनिषत् एतन्मन्त्रपारायणोपनिषत् ताम् ।

(ब) प्रकृष्टानां विशिष्टानां पुण्यानां यः परिपाकः परिणामः स एव उपादानं कारणं यस्य स तथोक्तः। भवतु पुण्यविशेषमाहात्म्यादेषां सम्भवः, द्विवचनम् आवयोरस्त्राणीत्यत्र आवयोरिति द्विवचनप्रयोगः कथं त्वया कृत इत्यर्थः ।

(१६) ननु भो सखे! किम् आयुष्मतो दीर्घायुषः लवस्य नरेन्द्रसैन्यैः राजसैन्यैः आयोधनं युद्धम् आत्थ ? ब्रवीषि तथा तत्प्रकारि इति गते सति (इण् धातोः क्विप् ततः सप्तमी) तैः सह युद्धे सतीत्यर्थः अद्य भुवनेषु जगत्सु अधिराजशब्दः अस्तं विनाशम् एतु प्राप्नोतु। अद्य क्षत्रस्य क्षत्रियजातेः शस्त्रशिखिनः अस्त्राग्नयः शमं विलयं यान्तु भजन्तु। यदि तदुपरि तेषां शस्त्रघातः स्यात् तदा अहं युद्धकर्मणि प्रवृत्तः सर्वानेव राजन्यवर्गान् हनिष्यामीति भावः। वसन्ततिलकं वृत्तम् ।

रामः । अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव दत्तपुलकं करोति माम् ।
नवनीलनीरधरधीरगर्जित-
क्षणबद्धकुड्मलकदम्बडम्बरम् ॥ १७ ॥

लवः । अयमसौ मम ज्यायान् आर्य्यः कुशो नाम भरताश्रमात् प्रतिनिवृत्तः ।

रामः । [ सकौतुकम् । ] वत्स ! इत एव आह्वयैनमप्यायुष्मन्तम् ।

लवः । एवम् । [ इति परिक्रामति । ]

ततः प्रविशति कुशः ।

कुशः । साङ्कुतहर्षधैर्य्यं धनुरास्फालयन् ।

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादामनो-
र्दृप्तानां दहनाय दीपितनिजक्षत्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दीप्तास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥ १८ ॥

विकटं परिक्रामति ।

---

( १७ ) अथ इन्द्रमणेरिव इन्द्रनीलमणेरिव मेचका श्यामला छविः कान्तिर्यस्य स तथोक्तः कोऽयं ध्वनिना कण्ठस्वरेण एव दत्तपुलकं जनितरोमाञ्चं मां नवः नूतनः नीलः श्यामलः यः नीरधरः पयोधरः मेघ इति यावत् तस्य धीरगर्जितक्षणे गम्भीरगर्जनकाले वर्षास्वित्यर्थः बद्धानि जातानि कुड्मलानि मुकुलानि यस्य तथोक्तस्य कदम्बतरोः कदम्बवृक्षस्येव डम्बरः साहश्यं यस्मिन् तं तथोक्तं कदम्बतरुसदृशमित्यर्थः करोति । मञ्जुभाषिणी वृत्तम् ।

( १८ ) विवस्वतः सूर्य्यस्य अपत्यं पुमान् वैवस्वतः मनुः सूर्य्यवंश्यः इत्यर्थः तस्मात् मनोः आ आरभ्य ( आङ्योगे पञ्चमी ) दत्ता इन्द्राय देवराजाय अभयदक्षिणा असुरेभ्यः अभयसूचकाश्वासदानं यैस्तैस्तथोक्तैः, दृप्तानां बलगर्वितानां दहनाय दर्पहरणाय दीपितः प्रज्वालितः निजः क्षत्रप्रतापाग्निः क्षत्रियतेजः

राम:। कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेक:।

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्।
कौमारकेऽपि गिरिवद् गुरुतां दधानो
वीरो रस: किमयमेत्युत दर्प एव॥ १९॥

लव:। [ उपसृत्य। ] जयति आर्य्य:।

कुश:। ननु आयुष्मन्! किमियं वार्त्ता युद्धं युद्धमिति।

लव:। यत्किञ्चिदेतत्, उरुदृप्तभावमुत्सृज्यार्य्योऽस्मिन् विनयेन वर्त्तताम्।

कुश:। किमर्थम्?

लव:। अत्र देवो रघुपतिस्तिष्ठति, स च स्निह्यति आवयोरुत्कण्ठते च युष्मत्सन्निकर्षस्य।

---

यैस्तादृशैरादित्यै: सूर्य्यवंशसम्भूतै: सूर्य्यवंशसम्भूतत्वात् प्रलयसूर्य्यसदृशदाहात्मकतेजोविशिष्टैरित्यर्थ: नृपतिभि: राजभि: यदि विग्रह: युद्धं ततस्तदा दीप्राणां दीप्तिमताम् अस्त्राणां स्फुरन्त्य: विसृमरा: चतुर्दिक्षु चञ्चलं लेलन्त्य: या उग्रा: प्रचण्डा: दीधितिशिखा: किरणज्वाला: ताभिर्नीराजिता नीराजनारूपमङ्गलाचरणचिह्निता निरतिशयदीप्तिशालिनीत्यर्थ: ज्या मौर्वी यस्य तत् तथोक्तम् एतत् मम धनु: धन्यं श्लाघ्यम्। आ मनो: स्थिरयशसां त्रिभुवनविजयिनां प्रतिद्वन्द्विनां पराजयेन निखिलभुवनाभिभवोद्भूतयश:समागमात् मे युयुत्सा चरितार्था भविष्यतीति भाव:। शार्दूलविक्रीडितं वृत्तम्।

( १९ ) केनेदमनुमीयते पौरुषाधिक्यमित्यत आह दृष्टिरिति। दृष्टि: नयनभङ्गि: विलोकनप्रकार इति यावत् अस्य क्षत्रियपोतकस्येत्यर्थ: तृणीकृत: तृणवदतिलघुत्वेन गणित: जगत्त्रयस्य त्रिभुवनस्य सत्त्वसार: बलसारांशसमष्टिरित्यर्थ: यया सा तथोक्ता, धीरा गम्भीरा गम्भीरत्वसूचिकेत्यर्थ: उद्धता वीरत्वसूचिका च गति: पदक्षेपप्रकार: धरित्रीं नमयतीव सर्वंसहापि सती तथाविधां गतिं सोढुं न शक्नोतीवेत्यर्थ:। कौमारके बाल्ये वयसि अपि गिरिवत् गुरुतां धारयन् अयं किं मूर्त्तिमान् वीरो रस: उत अथवा दर्प एव एति आगच्छति। वसन्ततिलकं वृत्तम्।

कुशः। [सतर्कम्।] स रामायणकथानायको ब्रह्म-घोषस्य (भ) गोपायिता।

लवः। अथ किम्।

कुशः। आशंसनीयपुण्यदर्शनः स महात्मा, किन्तु कथ मस्माभिरुपगन्तव्य इति न सम्प्रधारयामि (म)।

लवः। यथा गुरुस्तथोपचारेण।

कुशः। अपि कथं नामैतत्।

लवः। अत्युदात्तः सुजनश्चन्द्रकेतुः ऊर्मिलेयः प्रियवयस्य इति सख्येन मामुपतिष्ठते, (य) तेन तत्सम्बन्धेन च धर्मतात एवायं राजर्षिरिति।

कुशः। सम्प्रति करणीयो राजन्येऽपि प्रश्रयः (र)।

लवः। पश्यतु एनम् आकारानुभावगाम्भीर्य्यसम्भाव्यमान विविधलोकोत्तरचरितातिशयमार्य्यो (ल) महापुरुषम्।

कुशः। निर्वर्ण्य।

अहो प्रामोदिकं रूपमनुभावश्च पावनः।

---

(भ) ब्रह्मघोषस्य वेदस्य। ब्रह्मकोषस्येति पाठे ब्रह्माण्डस्य जगत इत्यर्थः।

(म) आशंसनीयं प्रार्थनीयं पुण्यं पवित्रं दर्शनं यस्य स तादृशः। कथं कीदृशेन उपचारेण। न सम्प्रधारयमि न अवधारयितुं शक्नोमीति यावत्।

(य) अत्युदात्तः अत्युदारः। उपतिष्ठते उपचरति।

(र) सम्प्रति राजन्येऽपि प्रश्रयः करणीय इत्यनेन सङ्कोचवाक्येन कुशलवयोः स्वजात्यभिमानता ब्राह्मणम्मन्यता च लक्ष्यते।

(ल) आकारेण प्रशान्तमूर्त्या अनुभावेन प्रभावेण गाम्भीर्य्येण अनभिगम्या-शयत्वेन च सम्भाव्यमानः अनुमीयमानः विविधः लोकोत्तरः अलौकिकचरितातिशयः चरितोत्कर्षः अस्माभिरधीतः भार्गवदमनपितृसत्यपालनाहल्यादिमोचन-सेतुबन्धनराक्षसकुलनिवर्हणादिव्यापारः यस्य तं तथोक्तम्।

(२०) अहो आश्चर्य्यं प्रामोदिकं प्रमोदकरम् आनन्दजनकमित्यर्थः प्रसा-दिकमिति पाठे प्रसन्नतासूचकं प्रसन्नमित्यर्थः रूपम् आकृतिः पावनः पवित्रः

स्थाने रामायणकविर्देवीं वाचं व्यवीवृणत् ॥ २० ॥

[उपसृत्य।] तात! प्राचेतसान्तेवासी कुशोऽभिवादयते।

रामः। एहि आयुष्मन्!

अमृताध्मातजीमूतस्निग्धसंहननस्य ते।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः ॥ २१ ॥

[परिष्वज्य स्वगतम्।] तत् किमपत्यमयं दारकः।

अङ्गादङ्गात् सृत इव निजः स्नेहजो देहसारः
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेव।
सान्द्रानन्दक्षुभितहृदयप्रस्रवेनेव सृष्टो
गात्रं श्लेषे यदमृतरसस्रोतसा सिञ्चतीव ॥ २२ ॥

---

अनुभावः प्रभावस्य। अतएव रामायणकविः वाल्मीकिः स्थाने यथा पात्रे एव (स्थाने इत्युचितार्थकमव्ययम्) वाचं देवीं व्यवीवृणत् विवृतवान्। तद्विषयक-कथाविवरणं युक्तमेव कृतं वाल्मीकिनेत्यर्थः। व्यवीवृतदिति पाठे रामायणकवि-र्यद् वाचं देवीं व्यवीवृतत् एतत्कथामधिकृत्य काव्यरूपेण पर्यणमयत् तत् स्थाने युक्तमेव।

(२१) अयं जनः वात्सल्यात् स्नेहात् हेतोः अमृतेन जलेन आध्मातः परि-पूर्णः यो जीमूतः मेघः स इव स्निग्धं संहननं वपुर्यस्य तस्य तथोक्तस्य ते तव परिष्वङ्गस्य आलिङ्गनस्य उत्कण्ठते आलिङ्गनलाभार्यमुत्सुको भवति।

(२२) निजः स्वीयः मदीय इत्यर्थः स्नेहजः उपस्थितस्नेहजन्यरसः वात्सल्यरस इत्यर्थः। देह एव सारो यस्य स देहसारः मूर्त्तिमान् सन् अङ्गात् अङ्गात् सृत इव चरित इव। चेतनाधातुः चैतन्यम् एव प्रादुर्भूय शरीरेणा-विर्भूय बहिः स्थित इव। सान्द्रेण प्रगाढेन आनन्देन क्षुभितम् आलोड़ितं यद् हृदयमन्तःकरणं तस्य प्रस्रवेन स्यन्दीभूतेन सारेण सृष्ट इव। यत् यस्मात् श्लेषे आलिङ्गने सति अमृतरसस्रोतसा सुधारसप्रवाहेण गात्रं सिञ्चतीव अयमिति शेषः। अथवा सान्द्रानन्दक्षुभितहृदयहृदयप्रस्रवेनेव सृष्टः स्नेहजः निजो देहसारः अङ्गात् अङ्गात् सृत इव। चेतनाधातुरिव बहिः स्थित इव। मन्दाक्रान्ता वृत्तम्।

लवः। तात! ललाटन्तपो घर्मदीधितिस्तदत्र सालच्छाये (व) मुहूर्त्तमासनपरिग्रहं करोतु तातः।

रामः। यदभिरुचितं वत्साय।

सर्वे परिक्रम्य उपविशन्ति।

रामः। स्वगतम्।

अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च॥ २३॥

वपुरविहितसिद्धा एव लक्ष्मीविलासाः
प्रतिजनकमनीयं कान्तिमत् केतयन्ति।
अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा
विकसितमिव पद्मं विन्दवो माकरन्दाः॥ २४॥

भूयिष्ठाञ्च रघुकुलकुमारच्छायामनयोः (श) पश्यामि।

कठोरपारावतकण्ठमेचकं
वपुर्वृषस्कन्धसबन्धुरांशकम्।

---

(व) ललाटं तापयतीति ललाटन्तपः। घर्मा उष्णा दीधितयो रश्मयो यस्य स उष्णरश्मिः सूर्य्यः। सालच्छाये सालानां सालवृक्षाणां छाया सालच्छायं तस्मिन्। बाहुल्यार्थे छायान्तस्य क्लीवता।

(२३) अहो आश्चर्य्यं प्रश्रयस्य विनयस्य योगे सम्बन्धे अपि कुशस्य लवस्य च गतिः स्थितिः आसनम् आदिर्येषां ते तथोक्ताः भावाः अवस्थानकार्य्यादयः साम्राज्यशंसिनः राजलक्षणव्यञ्जकाः। एतौ राजपुत्राविव प्रतिभात इति भावः।

(२४) ते प्रसिद्धा मनोज्ञा मनोहराः रश्मयः ज्योतींषि अमलिनम् उज्ज्वलं रत्नमिव माकरन्दाः मधुसम्बन्धिनो विन्दवः मधुविन्दव इत्यर्थः विकसितं पद्ममिव, अविहिता अनाहार्य्या अपि सिद्धा स्वभावसिद्धा लक्ष्मीः श्रीः शरीरसौन्दर्य्यमित्यर्थः विलासाः मधुरभावललितचेष्टितादयश्च प्रतिजनकमनीयं सकललोकमनोहरं कान्तिमत् द्युतिमत् लावण्यमयमित्यर्थः अनयोर्वपुः केतयन्ति राजलक्षणवत्तया सूचयन्ति। मालिनीवृत्तम्।

(श) छायाम् कान्तिम्। रघुकुलकुमारसदृशकान्तिम्।

(२५) वपुः कठोरस्य प्रौढवयसः पारावतस्य कण्ठवत् मेचकं श्यामलं

प्रसन्नसिंहस्तिमितञ्च वीक्षितं
ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥ २५ ॥

[ सूक्ष्मं निरूप्य । ] अये न केवलमस्मदङ्गसंवादिनी आकृतिः ( ष ) ।

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥ २६ ॥

मुक्ताच्छदन्तच्छविदन्तुरेयं सैवोष्ठमुद्रा स च कर्णपाशः ।
नेत्रे पुनर्यद्यपि रक्तनीले तथापि सौभाग्यगुणः स एव ॥२७॥

---

वृषस्य स्कन्ध इव स्कन्धौ यस्मिन् तत् तथोक्तम् श्रवन्धुरांशकं सुघटितावयवं वीक्षितं प्रसन्नसिंहस्येव स्तिमितं निश्चलं प्रसादचिह्नसूचकमित्यर्थः ध्वनिः कण्ठध्वनिः माङ्गल्यस्य शुभकर्मणि वाद्यमानस्येत्यर्थः मृदङ्गस्येव मांसलः स्निग्धगम्भीरः आनन्दोत्साहजनक इत्यर्थः । वंशस्थं वृत्तम् ।

( ष ) अस्मदङ्गसंवादिनी अस्मदाकारसदृशी ।

( २६ ) नैपुणेन निपुणतया उन्नेयम् अनुमेयम् सूक्ष्मतो विभावनीयमित्यर्थः जनकसुतायाः अपि तच्च तच्च मया यदनुभूतमित्यर्थः अनुरूपं सौसादृश्यम् इह अस्मिन् शिशुयुग्मेऽपि स्फुटं स्पष्टम् अस्ति विद्यते । प्रियायाः अभिनवशतपत्रश्रीमत् नवविकसितकमलसदृशं तत् आस्यं ननु मुखं पुनः मे मम गोचरीभूतमिव । तत्सादृश्यदर्शनात्तदेव पुनः स्मृतविषयीभूतमित्यर्थः । मालिनीवृत्तम् ।

( २७ ) मुक्ता इव अच्छा निर्मला या दन्तच्छविः दशनकान्तिः तया दन्तुरा संलापादिकाले सीताया दृश्यमानतादृशदन्तत्वात् तत्स्मरणाच्च दन्तुरेति प्रयोगः दशनांशुरुज्ज्वला इत्यर्थः सैव सा सीतासम्बन्धिनी एव सीतासदृशी इत्यर्थः ओष्ठमुद्रा ओष्ठावरणं स च स सीतासम्बन्धी एव कर्णपाशः सुन्दरकर्णयुगलम् । शोभार्थे पाशप्रत्ययः । ( पाशः केशादिपूर्वः स्यात् तत्सङ्घे, कर्णपूर्वकः । सुकर्णे चेति मेदिनी ) नेत्रे पुनः लोचने तु यद्यपि रक्ते च नीले च रक्तनीले तथापि स एव सौभाग्यं सौन्दर्य्यमेव गुणः नेत्रयोरित्यर्थः । वीरलक्षणत्वादस्मिन् शिशुयुगले नेत्रयो रक्तिमापि दृश्यते इति भावः । अतिशयोक्तिरलङ्कारः । उपजातिः वृत्तम् ।

तदेतत् प्राचेतसाध्युषितमरण्यं यत्र किल देवी परित्यक्ता, इयञ्च अनयोराकृतिर्वपुश्च, यदपि स्वतःप्रकाशानि अस्त्राणीति, तत्र विमृशामि, अपि खलु तच्चित्रदर्शनप्रासङ्गिकमस्त्राभ्यनुज्ञानमुपनतं स्यात्, नहि असाम्प्रदायिकानि अस्त्राणीति पूर्वेषामपि अनुशुश्रुमः अयञ्च संप्लवमानमात्मानं सुखातिशयो हृदयस्य मे विस्रम्भयते भूयिष्ठञ्च मया द्विधा प्रतिपन्नो देव्या गर्भभार आसीत् ( स )। [ सास्रम् । ]

पुरारूढ़े स्नेहे परिचयविकासादुपचिते-
रहो विस्रब्धाया अपि सहजलज्जाजड़दृशः ।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ॥ २८ ॥

---

( स ) तदेतदित्यादि । स्वतः प्रकाशानि अस्त्राणि "स्वतः प्रकाशान्यावयोरस्त्राणीति" यत् लवेनोक्तः मन्त्राधिगमवृत्तान्त इत्यर्थः, तत्र विमृशामि तस्मिन् विचिन्तयामि मे मनसि इदं वर्त्तते इत्यर्थः । अपि सम्भावनायाम् । चित्रदर्शनप्रसङ्गात् कृतम् अभ्यनुज्ञानं चित्रदर्शनकाले मम "सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति" १८पृ० यत् सम्भावितपुत्रां गर्भिणीं सीतां प्रति कथनं तदेतत् मदनुज्ञातम् अनयोः स्वतःसिद्धशस्त्रागमत्वात् सफलं जातं भवेत् अपि कुत एषा सम्भावनेत्याह नहि असाम्प्रदायिकानि अस्त्राणीति पूर्वेषामप्यनुशुश्रुम:। सम्प्रदायः गुरुपरम्परा तं विना आगतानि असाम्प्रदायिकानि गुरूपदेशं विना प्राप्तानीत्यर्थः अस्त्राणि जृम्भकास्त्राणि । इत्येतत् प्राचीनानामपि प्राचीनेभ्योऽपि न हि अनुशुश्रुमः श्रुतवन्तः । च पुनः अयम् अनुभूयमानः मे मम हृदयस्य अन्तःकरणस्य सुखातिशयः कुशलवदर्शनजन्यः सुखसम्भारः संप्लवमानं मम सुतावेताविति विचिन्त्य उच्चैर्भूतं मम आत्मानं विस्रम्भयते तवैव एतौ पुत्रौ इति प्रत्याययति । भूयिष्ठञ्च बहुवारं पुनः पुनरित्यर्थः । द्विधा प्रतिपन्नः द्विधा द्वितयत्वेन प्रतिपन्नः विदितः ।

( २८ ) पुरारूढ़े पूर्वजाते स्नेहे प्रणये परिचयविकासात् परस्परं प्रति परस्परस्य स्नेहादिवृत्तेः प्रकटनात् उपचिते वृद्धिं गते सति रहः रहसि विस्रब्धाया अपि गर्भे मत्कृतकरतलपरामर्शकाले इदं रहोवृत्तं न केनापि द्रष्टुं शक्यम् इति

[ रुदित्वा। ] तत्किमेतौ पृच्छामि केनापि उपायेन।

लवः। तत्किमेतत्।

वाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम्।
अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम्॥ २९॥

कुशः। अयि वत्स!

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमित्येवं पृच्छस्यनधिगतरामायण इव॥ ३०॥

रामः। [ स्वगतम्। ] अये तटस्थित आलापः, कृतं प्रश्नेन, दग्धहृदय! कोऽयमाकस्मिकस्ते स्नेहपरिप्लवो

---

विलक्ष्याया अपि सहजया स्वाभाविक्या लज्जया जड़े निस्पन्दे दृशौ नयने यस्याः तस्याः तथोक्तायाः प्रियायाः गर्भग्रन्थिः गर्भबन्धः प्रथमावस्थः अस्फुटपुष्टगर्भ इत्यर्थः मयैव आदौ प्रथमं करतलेन यः परामर्शः स्पर्शसञ्चारः संवाहनं वा तद्रूपा या कला क्रिया तया द्विधा द्वयात्मक इति ज्ञातः अनुभूतः तदनु तत्पश्चात् कैरपि दिवसैः कियद्दिनानन्तरमित्यर्थः तया सीतया ज्ञात इति शेषः। शिखरिणीवृत्तम्।

( २९ ) वो युष्माकं गौरवात् बहुवचनं जगन्मङ्गलं जगत्कल्याणकरं दर्शनेन प्रसादजनकत्वात् सर्वहितकरमित्यर्थः एतत् आननं मुखं वाष्पवर्षेण अश्रुप्रवाहेण, अवश्यायेन हिमजलेन अवसिक्तस्य अभिवृष्टस्य पुण्डरीकस्य पद्मस्य चारुतां किं कथं नीतम्।

( ३० ) सीतादेव्या विना रघुपतेः रामस्य किमिव न दुःखं दुःखजनकम्। हि यतः प्रियानाशे प्रियभार्य्यावियोगे सति कृत्स्नं समग्रं जगत् अरण्यं भवति अरण्यतुल्यं दुःखास्पदं भवतीत्यर्थः किलेति निश्चये। स ताहृशः तावान् तत्परिमाणः निरतिशय इत्यर्थः स्नेहः अयं निरवधिः अविच्छिन्नः यावदायुषं स्थायी इत्यर्थः वियोगोऽपि विच्छेदश्च। ताहृशस्नेहातिशयेन ईहृशो विरहः नितरामसह्य इति भावः। अतएव अनधिगतम् अनधीतं रामायणं येन सः तथोक्त इव अज्ञातरामवृत्तान्त इव किं कथं कस्मादित्यर्थः इत्येवम् इत्यनेन प्रकारेण तात! किमेतदित्यादिप्रकारेण इत्यर्थः पृच्छसि जिज्ञाससे राममिति शेषः। शिखरिणीवृत्तम्।

विकारः, एवञ्च निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि, भवतु तावदन्तरयामि। [ प्रकाशम्। ] वत्सौ! रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिस्यन्दः प्रशस्तिरादित्यवंशस्य, तत्र कौतूहलेन यत्किञ्चिच्छ्रोतुमिच्छामि (क)।

कुशः। स कृत्स्न एव सन्दर्भोऽस्माभिरावृत्तः, स्मृत्युपस्थितौ तावदिमौ बालचरितस्यान्त्येऽध्याये द्वौ श्लोकौ (ख)।

रामः। उदीरयतु वत्सः।

कुशः। प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः।
प्रियभावः स तु तया स्वगुणैरेव वर्द्धितः॥ २१॥
तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत्।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम्॥ २२॥ इति।

---

( क ) अये आलापः कुशलवयोः परस्परकथनं तटस्थितः तटे लङ्घितातिक्रान्तदेशे स्थितः मल्लङ्घितात् अन्यथासूचक इत्यर्थः। अनयोः संलापेन ज्ञायते जैतौ सीतासुतौ यतः सीताया अनयोर्जननीत्वे सीतादेव्येति प्रियानाम्न इति रघुपतेरिति वियोग इति च असम्बन्धसूचकानि पदानि न स्युः। अतः प्रश्नेन एतयोर्मातापितृगतेनेत्यर्थः कृतम् अलम्। सीतापुत्रप्राप्तिरूपदुराशाजनितसन्तापजनकत्वात् सन्तापितत्वाच्च दग्धेति हृदयविशेषणम्। आकस्मिकः अहेतुकः। स्नेहजन्यः परिप्लवः चाञ्चल्यं यस्मिन् स तथोक्तः। आकस्मिकस्तु पारिप्लव इति पाठे पारिप्लवो नृत्यवच्चाञ्चल्यमयो विकारः। निर्भिन्नः प्रकाशितः इति यावत् हृदयावेगः चित्तक्षोभः। अन्तरयामि दूरीकरोमि। सरस्वतीनिस्यन्दः सरस्वत्याः वाचः निस्यन्दः स्फुरणं श्लोकरूपेणाविर्भावः। प्रशस्तिः कीर्त्तिवर्णनम्।

( ख ) कृत्स्नः आद्योपान्तः। सन्दर्भो ग्रन्थः। आवृत्तः अभ्यस्तः। स्मृत्युपस्थितौ स्मृतिपथारूढौ।

( २१ ) सीता जानकी महात्मनः उदारचित्तस्य रामस्य प्रकृत्यैव स्वभावत एव प्रिया प्रीतिप्रदा आसीत्। स तु प्रियभावः पत्यनुरागः तया सीतया स्वगुणैः शौर्यविनयसौजन्यादिभिः गुणसन्तानैरेव वर्द्धितः वृद्धिं प्रापितः।

( २२ ) तथैव यथा रामस्य सीता प्रिया तद्वदेव रामः सीतायाः प्राणेभ्यो-

रामः । कष्टमतिदारुणो हृदयमर्मोपघातः, हा देवि ! एवं किल तदासीत् । अहो निरन्वयविपर्य्यासविरसहृत्तयो विप्रलम्भपर्यवसायिनस्तापयन्ति संसारवृत्तान्ताः ( ग ) ।

क्व तावानानन्दो निरतिशयविस्रम्भबहुलः,
क्व तेऽन्योन्यं यत्नाः, क्वचनु गहनाः कौतुकरसाः ।
सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति न तु पापो विरमति ॥ ३३ ॥

भोः कष्टम् ।

प्रियागुणसहस्राणामेकोन्मीलनपेशलः ।
य एव दुःस्मरः कालस्तमेव स्मारिता वयम् ॥ ३४ ॥

तदा किञ्चित् किञ्चित् कृतपदसहोभिः कतिपयै-

---

ऽपि जीवितादपि प्रियः प्रणयवान् अभवत् । हृदयमेव परस्परं परस्परसम्बन्धीयं प्रीतियोगं जानाति । न स अन्यैः निर्वचनीय इति भावः ।

( ग ) एवं किल तदासीत् तदा एवम् एतत्प्रकारः भगवद्दर्शितप्रकार इति यावत् किल एव आसीत् आवयोः प्रीतियोग इति शेषः । निरन्वयेन अहेतुना आकस्मिकेनेत्यर्थः विपर्य्यासेन अवस्थापरिवर्त्तनेन विरसा अन्यथाभूता वृत्तिर्भावो येषां ते तथोक्ताः । विप्रलम्भे प्रियवस्तुवियोगजनितशोके पर्य्यवसाने परि-णमन्तीति ते तथोक्ताः ।

( ३३ ) निरतिशयः सर्वातिगः यो विस्रम्भः प्रणयः विश्वासो वा तेन बहुलः सान्द्रतर इत्यर्थः तावान् तादृश आनन्दः हर्षः क्व कुतः । ते परस्परेण अनुभूताः अन्योन्यं परस्परं प्रति यत्नाः क्व कुतः । क्वचनु कुतो वा तथा गहनाः प्रगाढाः कौतुकरसा उत्सवव्यापाराः, कौतुकमभिलाषे स्यादुत्सवे नर्महर्षयोरिति मेदिनी । सुखे वा दुःखे वा हृदययोः परस्परस्य मनसोस्तत् पूर्ववत् ऐक्यं परस्परसमदुःख-सुखित्वं वा क्व कुतः । अधुना एतेषां न किमप्यस्तीत्यर्थः । तथापि तादृशसकल-सुखानामपगमेऽपि एष पापः दुःखसंविग्न इत्यर्थः प्राणः जीवनसूचकः निश्वासवायुः स्फुरति प्रवर्त्तते न तु विरमति न तु विश्राम्यति देहात् नापगच्छतीत्यर्थः । शिखरिणीवृत्तम् ।

( ३४ ) प्रियायाः गुणसहस्राणाम् असंख्यगुणानामित्यर्थः एकः अद्वितीयः यः उन्मीलनपेशलः प्रकटनावनम्रः प्रकटनप्रवणः प्रकाशकर इत्यर्थः दुःस्मरः स्मर्तुमशक्यः तमेव कालं वयं स्मारिताः ।

स्तदीषद्विस्तारि स्तनयुगलमासीत्कृतदृशः।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धस्य वपुषि ॥ २५ ॥

कुशः। अयञ्च मन्दाकिनीचित्रकूटवनविहारे सीतादेवीं सुहिश्य रघुपतेः श्लोकः।

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमग्रतः।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केसरः ॥ २६ ॥

रामः। [सलज्जितस्नेहकरुणम्।] अतिनामायं मुग्धः शिशुजनो विशेषतस्त्वरण्यचरः। हा देवि! स्मरसि वा तस्य प्रदेशस्य तत्समयविस्रम्भातिशयप्रसङ्गसाक्षिणः, कष्टं भोः कष्टम्।

श्रमाम्बुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी-
मरुत्तरलितालकाकुलललाटचन्द्रद्युति।
अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशसौम्यं मुखम् ॥ २७ ॥

---

( २५ ) तदा तस्मिन् काले कृतदृशः हरिणलोचनायाः प्रियायाः तत् स्तनयुगलं कुचद्वयं किञ्चित् किञ्चित् कृतपदं लीकस्य: कृताधिष्ठानं प्रकाशितं सदित्यर्थः कतिपयैः अल्पैरित्यर्थः अहोभिर्दिवसैः ईषद्विस्तारि किञ्चित् विस्तारवत् आसीत्। यत्र यस्मिन् काले वयसः यौवनस्य स्नेहस्य प्रणयस्य आकूतस्य अभिलाषस्य च व्यतिकरेण एकत्र संघटनेन घनः प्रगाढः मदनः कामः प्रगल्भः प्रौढः व्यापारः यस्य तादृशः समधिकारम्भः सन्नित्यर्थः हृदि अन्तःकरणे, मुग्धः लज्जावशात् अनभिज्ञेयः असम्यक् प्रकाशित इति यावत् तादृशस्य सन् स्फुरति आविर्भवति। शिखरिणीवृत्तम्।

( २६ ) अयं शिलापट्टः शिलाफलकः त्वदर्थमिव तव उपवेशनार्थमिवेत्यर्थः अग्रतः पुरतः विन्यस्तः पातितः। यस्य शिलापट्टस्य अभितः सर्वतः पुष्पैः प्रवृष्ट इव तवागमनात् आनन्दसूचनार्थं कृतपुष्पवृष्टिरिव अयं केशरः वकुलवृक्षः आस्ते इति शेषः। सेवकवत् आसनादिकं दत्त्वा दण्डयमानस्तिष्ठतीति भावः।

( २७ ) श्रमाम्बुभिः श्रमजलैः स्वेदविन्दुभिरित्यर्थः शिशिरीभवत् शीतलं प्रसृतेन प्रचलता मन्देन मृदुना मन्दाकिनीमरुता सुरगङ्गावायुना तरलितैः कम्पितैः अलकैश्चूर्णकुन्तलैः कलङ्कसदृशैरित्यर्थः आकुलस्य व्याप्तस्य संपृक्तस्येति

[ स्तम्भित इव स्थित्वा । सकरुणम् । ] अहो नु खलु भोः ।

चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः
प्रवासेऽप्याश्वासं न खलु न करोति प्रियजनः ।
जगज्जीर्णारण्यं भवति हि विकल्पव्युपरमे
कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥ ३८ ॥

नेपथ्ये, वशिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः

सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।
जराग्रस्तैर्गात्रैरथ खलु विदूराश्रमतया
चिरेणागच्छन्ति त्वरितमनसोऽपि श्रमजड़ाः ॥३९॥

रामः । कथं भगवन्तौ अरुन्धतीवशिष्ठौ, अम्बा, जनकश्च

---

यावत् ललाटरूपचन्द्रस्य द्युतिः कान्तिर्यस्मिन् तत् अतएव सर्वथैव चन्द्रोपम-मित्यर्थः । कुङ्कुमेन कलङ्कितौ चिह्नितौ तथापि उज्ज्वलौ कपोलौ यस्मिन् तत्, निराभरणः भूषणरहितः तथापि सुन्दरः यः श्रवणपाशः सुन्दरकर्णयुगलं, सुन्दरार्थे पाशप्रत्ययः । तेन सौम्यं मनोहरं मुखं तवेति शेषः उत्प्रेक्ष्यते मया प्रत्यक्षवत् दृश्यते । पृथ्वीवृत्तम् ।

( ३८ ) चिरं दीर्घकालम् अनवरतमित्यर्थः ध्यात्वा ध्यात्वा एकाग्रचित्तेन चिन्तयित्वेत्यर्थः निर्माय कल्पनाबलेन तन्मूर्त्तिं गठित्वा पुरतः अग्रतः पिहितः उपस्थापित इव प्रियजनः प्रणयिनीप्रवासेऽपि आश्वासं सान्त्वनां न करोति इति खलु न सान्त्वनां करोत्येवेत्यर्थः । विकल्पस्य कल्पनाया व्युपरमे विनिवृत्तौ सति कल्पनानिवृत्तौ तादृशमूर्त्तेरपि व्युपरमे सतीत्यर्थः जगत् जीर्णं नीरसशुष्क-शाखापल्लवाकीर्णभग्नद्रुममरण्यं तद्वद् विरागहेतुर्दुःखसन्तापकरञ्च भवति हि । तदनु ततः परं हृदयं कुकूलानां तुषाग्नीनां, कुकूलं शङ्कुसङ्कीर्णश्वभ्रे ना तु तुषा-नले इति मेदिनी । राशौ पच्यते दह्यते इव । शिखरिणीवृत्तम् ।

( ३९ ) शिशुकलहं चन्द्रकेतुलवयोः युद्धमाकर्ण्य श्रुत्वा सभया भीताः अतएव त्वरितमनसाः शीघ्रमागन्तुकामा अपि विदूराश्रमतया रणभूमितोऽस्माकमावसथानां दूरवर्त्तितयेत्यर्थः जराग्रस्तैः वार्द्धक्यादतिदुर्बलैर्देहैरित्यर्थः गात्रैः शरीरैः उप-लक्षिताः श्रमजड़ाः श्रमकातराः वशिष्ठो वाल्मीकिः अथ जनकः अरुन्धत्या सह दशरथमहिष्यः कौशल्या च, एकत्वेऽपि गौरवाद् बहुवचनम् । चिरेण आगच्छन्ति । शिखरिणीवृत्तम् ।

अतैव कथं खलु एते द्रष्टव्याः। [सकरुणं विलोक्य।] अहह! तातजनकस्तु दैवादत्रैवायात इति वज्रेणैव ताड़ितोऽस्मि मन्दभाग्यः।

सम्बन्धस्पृहणीयताप्रमुदितैर्जुष्टे वशिष्ठादिभि-
र्दृष्टापत्यविवाहमङ्गलमहे तत्तातयोः सङ्गतम्।
पश्यन्नीदृशमीदृशे पितृसखं वृत्ते महावैशसे
दीर्ये किं न सहस्रधाहमथवा रामेण किं दुष्करम्॥४०॥

[नेपथ्ये।] कष्टं कष्टम्।

अनुभावमात्रसमुपस्थितश्रियं
सहसैव वीक्ष्य रघुनाथमीदृशम्।
प्रथमप्ररूढजनकप्रबोधनाद्
विधुराः प्रमोहमुपयान्ति मातरः॥ ४१ ॥

रामः। हा तात! हा मातरः! हा जनक!

---

(४०) सम्बन्धस्य वैवाहिकसम्बन्धस्य स्पृहणीयतया श्लाघ्यतया प्रमुदितैः प्रीतैः वशिष्ठादिभिः जुष्टे अधिष्ठिते अपत्यविवाहमङ्गलमहे अपत्यानाम् अस्माकं सीतादीनां च विवाहरूपशुभकर्म्मणि यो महः उत्सवः तस्मिन् तातयोः पितृश्वशुरयोः दशरथजनकयोरित्यर्थः तत् स्मृतिपथवर्त्ति सङ्गतं समागमं दृष्टा अधुना ईदृशे हृदयदाहके महावैशसे दारुणविपत्पाते वृत्ते सति पितुः सखायं पितृसखं श्वशुरम् ईदृशं पूर्वश्लोकवर्णितप्रकारं पश्यन् अहं किं कथं सहस्रधा न दीर्य्ये न विदीर्णो भवामि। अथवा रामेण सीतापरिहारिणा पाषाणहृदयेनेत्यर्थः किं कार्य्यं दुष्करं कर्तुमशक्यम्। शार्दूलविक्रीड़ितं वृत्तम्।

(४१) ईदृशम् एवम्प्रकारम् अनुभावमात्रेण पूर्वलक्षिताकारचेष्टादिना समुपस्थिता स्मृतिमागता स्मृता अभिज्ञातेति यावत् श्रीः रूपं यस्य तं तथोक्तं सीताशोकमलिनशीर्णकायत्वात् अयं राम इति कष्टेन अभिज्ञेयमित्यर्थः रघुनाथं रामं सहसैव वीक्ष्य विलोक्य प्रथमं प्ररूढस्य अयं कः इति ज्ञातुमशक्तस्य पश्चात् अनुभावादिना ज्ञातवत इत्यर्थः जनकस्य प्रबोधनात् अयं राम इति विज्ञापनात् मातरः कौशल्यारुन्धत्यादयः विधुराः रामस्यावस्थादर्शनात् शोकाभिभूताः सत्यः प्रमोहं मूर्च्छाम् उपयान्ति उपगच्छन्ति। मञ्जुभाषिणी वृत्तम्।

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम् ।
तस्मिन्नकरुणे पापे वृथा वः करुणा मयि ॥ ४२ ॥

यावत् सम्भावयामि । [ इति उत्तिष्ठति । ]

कुशलवौ । इत इतस्तातः ।

सकरुणं परिक्रम्य निष्क्रान्ताः सर्वे ।

इति कुमारप्रत्यभिज्ञानो नाम षष्ठोऽङ्कः ।

---

## सप्तमोऽङ्कः ।

ततः प्रविशति लक्ष्मणः ।

लक्ष्मणः । भो भो भगवता खलु वाल्मीकिना सब्रह्मक्षत्रपौरजानपदाः प्रजाः सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्य्यगुरगनायकनिकायो जङ्गमः स्थावरश्च भूतग्रामः स्वप्रभावेण सन्निधापितः आदिष्टश्चाहमार्य्येण वत्स लक्ष्मण ! भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः, तद्गङ्गातीरमातोद्यस्थानमुपगम्य क्रियतां समाजसन्निवेश इति । कृतञ्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानेषु समुपवेशनं मया ( क )। अयन्तु,

---

( ४२ ) जनकानां रघूणाञ्च यत् कृत्स्नं समग्रं गोत्रमङ्गलं गोत्रस्य मङ्गलभूतं सर्वकल्याणनिदानभूतमित्यर्थः सीतारूपं तस्मिन् उभयकुलकल्याणभूते पवित्रे इत्यर्थः सीताधने अकरुणे नास्ति करुणा दया यस्य तस्मिन् तथोक्ते परिणाममचिन्त्यैव अकारणं सीतायामतिनृशंसदण्डविधायिनि पापे पापात्मके मयि वो युष्माकं करुणा दया वृथा निष्फला दयाया मङ्गलकारणे प्रवर्त्तनात् मत्पापस्य प्रायश्चित्ताभावात् पुनर्मङ्गलस्याशक्यसम्भावनत्वाच्च सा निष्फलेति नाहं दयार्हं इति भावः ।

---

( क ) देवानां असुराणां तिरश्चां पशुपक्षिणाम् उरगाणां सर्पाणाञ्च नायकनिकायः अधिराजसमूहः तेन सह वर्त्तमानः । आतोद्यस्थानं वीणादिवाद्यस्थानं रङ्गभूमिमित्यर्थः ।

राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः।
वाल्मीकिगौरवादार्य्यं इत एवाभिवर्त्तते ॥ १ ॥

ततः प्रविशति रामः।

रामः। वत्स लक्ष्मण! अपि स्थिता रङ्गप्रेक्षकाः।

लक्ष्म। अथ किम्।

रामः। इमौ पुनर्वत्सौ कुशलवौ चन्द्रकेतुसदृशीं स्थानप्रतिपत्तिं लम्भयितव्यौ (ख)।

लक्ष्म। प्रभुस्नेहप्रत्ययात्तथैव कृतम्। इदन्तु आस्तीर्णं राजासनमुपविशतु आर्य्यः।

राम उपविशति।

सर्वे चोपविशन्ति।

रामः। प्रस्तूयतां भोः।

[प्रविश्य सूत्रधारः।] भो भो भगवान् भूतार्थवादी प्राचेतसः सजङ्गमस्थावरं जगदाज्ञापयति, यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनकरुणाद्भुतरसं किञ्चिदुपनिबद्धं, तत्र कार्य्यगौरवादवधातव्यमिति (ग)।

---

(१) राज्येति। राज्याश्रमनिवासेऽपि राज्यरूपः आश्रमः एव निवासो यस्य तस्मिन् तथोक्तेऽपि प्राप्तं स्वीकृतं कष्टं दुःखकरं मुनिव्रतं ब्रह्मचर्य्यं येन सः, तादृश आर्य्यो रामः वाल्मीकौ यत् गौरवं बहुमानबुद्धिस्तस्माद्धेतोः इत एव अभिवर्त्तते आगच्छति।

(ख) स्थानप्रतिपत्तिं स्थानदानेन प्रतिपत्तिं गौरवम्।

(ग) प्रविश्य सूत्रधार इत्यादिना गर्भाङ्कमारभते। गर्भाङ्को यथा साहित्यदर्पणे, अङ्कोदरप्रविष्टो यो रङ्गद्वारा मुखादिमान्। अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि इति। भूतार्थवादी, भूतं सत्यम् अर्थमभिधेयम् इति वृत्तरूपं वदति यः सः, सत्येतिहासवक्तेत्यर्थः। सजङ्गमस्थावरं सचराचरम्। आर्षेण, ऋषिसम्बन्धिना ध्यानरूपेणेत्यर्थः। किञ्चित् रूपकमिति शेषः। कार्य्यगौरवात् रूपकाभिनये यत् गौरवं समादरस्तस्मात्।

रामः। एतदुक्तं भवति। साक्षात्कृतधर्माण ऋषयः, तेषामम्टतसाराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद् व्याहन्यन्त इत्यनभिशङ्कनीयानीति ( घ )।

[ नेपथ्ये। ] हा अज्जउत्त! हा कुमार लक्खण! एआइणीं मन्दभाइणीं असरणं अरसे आसस्पप्रसववेअणं हदासं सावदा मं अहिलसन्ति, साहं दाणिं मन्दभाइणी भाइरहीए अत्ताणं णिक्खिवेमि ( १ )।

लक्ष्म। [ आत्मगतम्। ] कष्टं वतान्यदेव किमपि।

सूत्र। विश्वम्भरात्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥ २ ॥

इति सूत्रधारी निष्क्रान्तः।

रामः। देवि! क्षणमपेक्षस्व।

लक्ष्म। आर्य्य! नाटकमिदं नाटकमिदम्।

रामः। हा देवि! दण्डकारण्यवासप्रियसखि! एष ते रामाद्वै वदुर्विपाकः।

लक्ष्म। आर्य्य! दृश्यतां तावत् प्रबन्धार्थः।

---

( १ ) हा आर्य्यपुत्र! हा कुमार लक्ष्मण! एकाकिनीं मन्दभागिनीं अशरणामरण्ये आसन्नप्रसववेदनां हताशां श्वापदा मामभिलषन्ति, साहमिदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षिपामि।

---

( घ ) अमृतसाराणि अमृतवत् सार उत्कर्षः येषां तानि व्याहन्यन्ते प्रतिहतानि न भवन्ति सर्वाण्येव तेषां ज्ञानविषयाणि भवन्तीत्यर्थः अनभिशङ्कनीयानि न सन्देहविषयाणि। परोरजांसि रजोगुणेन असंस्पृष्टानि सत्त्वगुणप्रधानानीत्यर्थः।

( २ ) विश्वेति। विश्वं बिभर्त्ति या सा विश्वम्भरा पृथिवी तस्या आत्मजा कन्या देवी सीता राज्ञा रामेण महावने त्यक्ता सती प्राप्तप्रसवं समुपस्थितप्रसवकालम् आत्मानं शरीरम्, आत्मा देहे धृतौ जीवे स्वभावे परमात्मनीति विश्वः। गङ्गादेव्यां भागीरथीप्रवाहे इत्यर्थः विमुञ्चति निक्षिपति।

राम: । एष सज्जोऽस्मि वज्रमयः ।

ततः प्रविशत्युत्सङ्गितैकैकदारकाभ्यां पृथ्वीगङ्गाभ्यामवलम्बिता सीता ।

राम: । वत्स लक्ष्मण ! असंविज्ञातमनिबन्धनं तम इव प्रविशामि, धारय माम् ।

गङ्गा । समाश्वसिहि कल्याणि दिष्ट्या वैदेहि ! वर्द्धसे ।

अन्तर्जले प्रसूतासि रघुवंशधरौ सुतौ ॥ ३ ॥

सीता । [ समाश्वस्य । ] दिट्ठिआ दारए पसूदम्हि, हा अज्जउत्त ( २ ) । [ इति मूर्च्छति । ]

लक्ष्म । [ पादयोर्निपत्य । ] आर्य्ये ! आर्य्ये ! दिष्ट्या वर्द्धामहे,कल्याणप्ररोहो रघुवंशः । [ विलोक्य । ] हा हा कथं क्षुभितवाष्पोत्पीड़निर्भरः प्रमुग्ध एव आर्य्यः । [ इति वीजयति । ]

पृथ्वी । वत्से ! समाश्वसिहि समाश्वसिहि ।

सीता । [ आश्वस्य । ] भअवदि ! का तुमं इअं अ ( ३ ) ।

पृथ्वी । इयन्ते श्वशुरकुलदेवता भागीरथी ।

सीता । भअवदि ! णमो दे णमो दे ( ४ ) ।

भागी । चारित्रोपचितां कल्याणसम्पदमनुगच्छ ।

लक्ष्म । अनुगृहीताः स्मः ।

भागी । इयन्तु जननी ते वसुन्धरा ।

सीता । हा अम्ब ! ईदिसी अहं तुए दिट्ठा ( ५ ) ।

---

( २ ) दिष्ट्या दारकौ प्रसूतास्मि, हा आर्य्यपुत्र !

( ३ ) भगवति ! का त्वमियञ्च ।

( ४ ) भगवति ! नमस्ते नमस्ते ।

( ५ ) हा अम्ब ! ईदृशी अहं त्वया दृष्टा । ईदृशी चिरदुःखभागिनीत्यर्थः ।

---

(३) समेति । हे कल्याणि ! वैदेहि ! सीते ! समाश्वसिहि आश्वस्ता भव त्वं दिष्ट्या भाग्येन वर्द्धसे सौभाग्यवती असीत्यर्थः । कुत इत्याह अन्तरिति । जलस्यान्तः अन्तर्जलं जलमध्ये रघुवंशधरौ रघुकुलप्रदीपौ सुतौ पुत्रौ प्रसूता असि ।

पृथ्वी । एहि वत्से ! एहि पुत्रि ! [ इति सीतामालिङ्ग्य मूर्च्छति । ]

लक्ष्म । [सहर्षम् ।] दिष्ट्या पृथ्वीगङ्गाभ्यामभ्युपपन्ना आर्य्या ।

रामः । [ अवलोक्य । ] करुणतरं खलु एतद्वर्त्तते, विश्वम्भरापि नाम व्यथत इति जितमपत्यस्नेहेन, यद्वा सर्वसाधारणो ह्येष मोहग्रन्थिरन्तश्चरश्चेतनावतामनुपप्लवः संसारतन्तुः ( ङ ) ।

भागी । वत्से वैदेहि ! देवि भूतधात्रि ! समाश्वसिहि ।

पृथिवी । देवि ! सीतां प्रसूय कथमाश्वसिमि ।

एकश्चिरं राक्षसमध्यवासः
साङ्गो, द्वितीयश्च सुदुःश्रवोऽस्याः ।

भागी । को नाम पाकाभिमुखस्य जन्तो-
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ ४ ॥

पृथिवी । भागीरथि ! सदृशमुक्तम् । युक्तमेतद्वा(च)रामभद्रस्य ।

---

( ङ ) विश्वम्भरापि विश्वं सर्वं बिभर्त्ति धारयतीत्यखिलक्लेशसहनक्षमा सर्वंसहा पृथिवी सापि व्यथते यदा क्लेशमनुभवति तदा अपत्यस्नेहेन सन्तानवात्सल्येन जितं सर्वोत्कर्षेण स्थितम् । मोहः स्नेहजनितजाड्यं ग्रन्थिर्बन्धनं यस्य सः । चेतनावतां सर्वप्राणिनाम् अन्तश्चरोऽन्तःकरणवर्त्ती । अनुपप्लवः अनुच्छेद्यः ।

( ४ ) अस्याः सीतायाः दीर्घकालं राक्षसमध्यवास एकः, अङ्गेन तदपवादस्याङ्गभूतेन विविधापवादेन सह वर्त्तमानः स्वामिकृतपरित्यागः द्वितीय उभय एवेत्यर्थः सुदुःश्रवः श्रोतुमपि अशक्यः किमु सहनमाश्वासनं वेति भावः ।

को नाम जन्तुः को जनः नाम सम्भावनायां, न तादृशस्य जनस्य सम्भव इत्यर्थः । पाकाभिमुखस्य कार्य्यरूपेण परिणमतः दैवस्य कारणस्य द्वाराणि तत्साधनरूपभवितव्यद्वाराणि पिधातुम् अपिधातुम् आच्छादनेन निरोद्धुं तत्परिणमनबाधां जनयितुमित्यर्थः ईष्टे शक्नोति । न कोऽप्यवश्यम्भावि कारणफलं निवर्त्तयितुं प्रभवति अतो मनुष्यासाध्ये दुर्निमित्ते किं वृथा शोक इति भावः । इन्द्रवज्रावृत्तम् ।

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीड़ितः ।
नाहं न जनको नाग्निर्नानुवृत्तिर्न सन्ततिः ॥ ५ ॥

सीता । अज्जउत्तं सुमराविदह्मि (६) ।

पृथिवी । आः कस्तवार्य्यपुत्त्रः ?

सीता । [सलज्जास्रम् ।] जहा वा अम्बा भणादि (७) ।

रामः । अम्ब पृथ्वि ! ईदृशोऽस्मि ।

भागी । भगवति वसुन्धरे ! शरीरमसि संसारस्य, तत् किमसंविदानेव जामात्रे कुप्यसि । *

घोरं लोके विततमयशो, या च वह्नौ विशुद्धि-
र्लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।

(६) आर्य्यपुत्रं स्मारितास्मि ।
(७) यथा वा अम्बा भणति ।

(४) युक्तमेवद्वा वा पक्षान्तरमपि द्रष्टव्यम् । एतत् किं युक्तमासीत् अपितु सर्वथैवैतदनुचितमासीदित्यर्थः ।

(५) बाल्ये शैशवे बालकेन रामेण पीड़ितः विवाहसंस्कारे अग्निसाक्षात्कारं यथाविधि तत्तद्विव्यपूर्वकं गृहीत इत्यर्थः बाल्यादपि निर्दोषत्वेन परिचितस्य पाणिः करः न प्रमाणीकृतः न अवेक्षितः विचारणीयतया न गणितः । न अहं सर्वदोषदर्शित्वात् मातृत्वाच्च अहमपि अवेक्षणीयो निश्चास्य आसमिति भावः । न जनकः पितृत्वात् सोऽपि अवेक्षणीय आसीत् सोऽपि न अवेक्षितः । नापि अग्निः सीताया निर्दोषत्वं सूचयति इत्यर्थः । अग्निशुद्धावपि त्यागे अग्निवचनमप्रमाणीकृतमिति भावः । अनुवृत्तिः सीतायाः तद्गतजीवितायास्तथाविधा वनवासकष्टस्वीकारपूर्वकसेवा अपि न अवेक्षिता न च सन्ततिः गर्भस्थपुत्त्ररूपाऽपि न अवेक्षिता इयं मरिष्यति न वा इति न विचारितम् ।

* देहानां पार्थिवत्वात् शरीरभूता, उत्पत्तिकारणमित्यर्थः । असंविदानेव रामकृतसीतापरित्यागकारणमविजानतीव । जामात्रे रामाय, जामात्रे इत्यत्र, यस्मै दित्सासूया क्रोधेत्यादिना चतुर्थी ।

(६) लोके जगति घोरमतिदुर्विषहम् अयशः रक्षोगृहस्थितिमूलं विततं सर्वतो व्याप्तम् । ननु कथमग्निपरीक्षिताया अयश इत्यत आह लङ्केति । लङ्का-

इक्ष्वाकूणां कुलधनमिदं यत् समाराधनीयः
कृत्स्नो लोकस्तदतिगहनं किं स वत्सः करोतु ॥ ६ ॥

लक्ष्म। अव्याहतान्तःप्रकाशा हि देवता भूतेषु विशेषेण गङ्गा, तदयमञ्जलिस्ते (च)।

रामः। अम्ब! अनुवृत्तस्त्वया भगीरथगृहे प्रसादः (छ)।

पृथ्वी। देवि! नित्यं प्रसन्नासि वः किन्त्वापातदुःसहस्नेहावेगेनैवं ब्रवीमि न पुनर्न जानामि सीतास्नेहं रामभद्रस्य (ज)।

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः।
लोकोत्तरेण सत्त्वेन प्रजापुण्यैश्च जीवति ॥ ७ ॥

---

दीपे या च वह्नौ असौ विशुद्धिः सीतायाः शुद्धिपरीक्षा ताम् इह अयोध्यायां जनः कथमिव श्रद्दधातु प्रत्येतु। ननु किं तस्य श्रद्धया अश्रद्धया वा अश्रद्दधानां पुनः अपवादिनामुपेक्षा दण्डो वा रामस्यायत्त आसीदिति कथं न स उपायोऽवलम्बित इत्यत आह यदिति। यत् कृत्स्नो लोकः प्रजाः समाराधनीयः रञ्जनीयः तदिदम् अतिगहनम् अन्येषां बुद्धिभिः दुष्प्रवेशम् अन्यैर्दुर्बोध्यमिति यावत् इक्ष्वाकूणाम् इक्ष्वाकुवंशीयानां कुलधनं वंशानुक्रमिकः परमो धर्मः। अत एवेत्यर्थः स वत्सः सीतापरित्यागं विना उपायान्तरविरहितः कृपापात्रभूत अस्माकं पुत्रतुल्यो रामः किं करोतु कमुपायमवलम्बतु। मन्दाक्रान्तावृत्तम्।

(च) अव्याहतः न विरुद्धः अन्तः अन्तःकरणस्य प्रकाशो धर्माधर्म्ये दयादिविविधान्तःकरणवृत्तेः स्फुरणम् इत्यर्थः याभ्यस्ताः हि। देवानां समूहा इति देवताः। भूतेषु प्राणिषु। भूतानामन्तःकरणवृत्तयस्तासां यथेच्छदृश्या इति भावः।

(छ) अनुवृत्तः अविच्छेदेनाभ्यस्तस्य प्रसादस्य अनुसरणं कृतः। न एष नूतनोऽनुग्रह इति भावः।

(ज) वः युष्मत्प्रसादपात्राणां भगीरथवंश्यानाम्।

(७) दैवात् दुर्दैववशात् वत्सां सीतां विहाय परित्यज्य दह्यमानेन विरहशोकसन्तप्तेन मनसा उपलक्षित इत्यर्थः स रामः लोकोत्तरेण अलौकिकेन सत्त्वेन धैर्येण प्रजानां पुण्यैश्च इष्टसाधनभूतैः रामप्रवर्त्तितधर्मैश्च जीवति प्राणान् धारयति, अन्यथा तादृशशोकेन न जीवेदिति भावः।

रामः । सकरुणा हि गुरवो गर्भरूपेषु ( झ ) ।

सीता । [ रुदती कृताञ्जलिः । ] णेदु मं अत्तणो अङ्गेसु विलअं अम्बा ( ८ ) ।

रामः । किमन्यद् ब्रवीतु ।

भागी । शान्तम् ! अविलीना वत्सरसहस्राणि भूयाः ।

पृथ्वी । वत्से ! अपि रक्षणीयौ ते पुत्रकौ ( ञ ) ।

सीता । अणाधह्मि ( ९ ) । *

रामः । हृदय ! वज्रमयमसि ( ट ) ।

भागी । कथं त्वं सनाथाप्यनाथा ।

सीता । कीदिसं मम अभव्वाए सणाधत्तणं (१०) (ठ) ।

देव्यौ । जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे ।
आवयोरपि यत्सङ्गात् पवित्रत्वं प्रकृष्यते ॥ ८ ॥

---

( ८ ) नयतु मामात्मनोऽङ्गेषु विलयमम्बा ।

( ९ ) अनाथास्मि ।

( १० ) कीदृशं ममाभव्यायाः सनाथत्वम् ।

---

( झ ) गर्भरूपेषु अपत्येषु ।

( ञ ) पुत्रकौ इमौ परमादरपात्रभूतौ सद्यःप्रसूतौ तनयौ रक्षणीयौ परिपालनीयौ अनयोः रक्षणानुरोधेनापि त्वया जीवितव्यमिति भावः । अपि अनुनयसम्भावनायाम् ।

* अनाथास्मि । नास्ति नाथः भर्ता ग्रासाच्छादनादिना मम सन्तानयोः पालयिता यस्याः सा अहं क एतौ परिरक्षयिष्यन्तीत्यर्थः । अणाधह्मि, किं एदेहिं इत्येव पाठः श्रेयान् । तत्पाठे अहम् अनाथा, मम एताभ्यां पुत्राभ्यां किं याभ्यां भर्तुः सन्तोषो न स्यात् तादृशाभ्यां गलग्रहभूताभ्यां दुःखकराभ्यां पुत्राभ्यां किं प्रयोजनमिति भावः ।

( ट ) एतत् सीतावचनं श्रुत्वापि न विदीर्य्यसे इति भावः ।

( ठ ) अभव्यायाः अमङ्गलास्पदायाः मन्दभागिन्या इत्यर्थः ।

( ड ) जगतां मङ्गलं कल्याणनिदानम् आत्मानं कथमवमन्यसे तिरस्करोषि ।

लक्ष्म । आर्य्ये ! श्रुतम् ।

रामः । शृणोतु लोकः ।

नेपथ्ये कलकलः ।

रामः । अद्भुततरं किमपि ।

सीता । किंत्ति अन्तरिक्खं पज्जलदि ( ११ ) ।

देव्यौ । ज्ञातम् ।

कृशाश्वः कौशिको राम इति येषां गुरुक्रमः ।
आविर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः ॥ ९ ॥

[नेपथ्ये ।] देवि सीते ! नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते ।
आलेख्यदर्शने देवो यदाह रघुनन्दनः ॥ १० ॥

सीता । दिट्ठिआ अत्थदेअदाओ परिप्फुरन्ति ( १२ ) ।

लक्ष्म । उक्तमासीदार्य्येण सर्व्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति ।

---

( ११ ) किमित्यन्तरीक्षं प्रज्वलति । पज्जाउलमिति पाठे । पर्य्याकुलं कलकलपूर्णम् ।

( १२ ) दिष्ट्या अस्त्रदेवताः परिस्फुरन्ति ।

---

यस्य तव सङ्गात् सम्पर्कात् आवयोरपि पवित्रत्वेन प्रसिद्धयोरपि पवित्रत्वं प्रकृष्यते परिवर्द्धते ।

( ९ ) कृशाश्वः, कौशिकः कुशिकनन्दनो विश्वामित्रः रामः इति एवंरूपः येषां अस्त्राणां गुरुक्रमः उपदेशकपौर्वापर्य्यम् । अर्थात् आदौ कृशाश्वः ततो विश्वामित्रः ततो रामः येषां अस्त्राणां प्रदातारः तानि एव अस्त्राणि जृम्भकैः प्रयोगसंहारमन्त्रैः सह आविर्भवन्ति प्रकाशन्ते ।

( १० ) हे देवि सीते ! ते तुभ्यं नमः नमस्कारः अस्तु । कुत इत्याह । ते तव पुत्रकौ नः अस्माकं गतिराश्रयः प्रभुभूतौ इत्यर्थः । कथमेतदित्याह । आलेख्यदर्शने वीथिकायां चित्रदर्शनकाले देवः रघुनन्दनः यत् एतदभिप्रायकम् आह तस्मादित्यर्थः सर्व्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति वाक्यानुसारेणैव वयं त्वत्पुत्रं भजाम इति भावः ।

देव्यौ । नमो वः परमास्त्रेभ्यो धन्याः स्मो वः परिग्रहात् ।
अनुध्यातैरुपेतव्यं वत्सयोर्भद्रमस्तु वः ॥ ११ ॥

रामः । क्षुभिताः कामपि दशां कुर्वन्ति मम साम्प्रतम् ।
विस्मयानन्दसन्दर्भजर्ज्जराः करुणोर्मयः ॥ १२ ॥

देव्यौ । मन्यस्व वत्से ! रामभद्रतुल्यौ इदानीन्ते पुत्तकौ संवृत्तौ ।

सीता । भअवदीओ ! को एदाणं क्खत्तिओचिदं कम्म करिस्सदित्ति (१३) ।

रामः । एषां वशिष्ठगुप्तानां रघूणां वंशवर्द्धिनी ।
कष्टं सीतापि सुतयोः संस्कर्त्तारं न विन्दति ॥ १३ ॥

देव्यौ । पुत्रि ! किं तवानया चिन्तया, एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेरर्पयिष्याव:, स एवैतयोः क्षत्रकृत्यं करिष्यति ।

यथा वशिष्ठाङ्गिरसावृषी प्राचेतसस्तथा ।

---

(१३) भगवत्यौ ! क एतयोः क्षत्रियोचितं कर्म करिष्यतीति ।

---

(११) परमास्त्रेभ्यः अहिंसत्वात् विजयप्रदत्वाच्च प्रधानभूतेभ्यः अस्त्ररूपेभ्यः वः युष्मभ्यं नमः, वयं वो युष्माकं परिग्रहात् स्वीकरणात् धन्याः स्मः श्लाघ्या भवामः । वत्सयोः सद्योजातयोः कुशलवयोरनुध्यातैः ध्यानैः उपेतव्यं युष्माभिरागन्तव्यम् । वो युष्माकं भद्रं कुशलमस्तु ।

(१२) विस्मयः आनन्दश्च तयोः सन्दर्भः ग्रन्थनं मिश्रणमित्यर्थः तेन जर्जराः अङ्कुराः करुणोर्मयः शोकतरङ्गाः क्षुभिताः भङ्गस्य प्राक् चञ्चलाः सन्तः सम्प्रति मम कामपि अनिर्वचनीयां नाहं यां वाक्येन प्रकाशयितुं शक्नोमीत्यर्थः तां दशाम् अवस्थां कुर्वन्ति ।

(१३) कष्टं वशिष्ठगुप्तानां वशिष्ठरक्षितानाम् एषां रघूणां रघुवंशीयानां वंशवर्द्धिनी कुलवधूः सीतापि सुतयोः संस्कर्त्तारं संस्काराणां कर्त्तारं न विन्दति न जानाति ।

(१४) वशिष्ठस्य, आङ्गिरसः शतानन्दश्च तौ ऋषी ऋक्सूत्रप्रणेतारौ यथा

रघूणां जनकानाञ्च वंशयोरुभयोरुभयोर्गुरुः ॥ १४ ॥

राम:। सुविचिन्तितं भगवतीभ्याम्।

लक्ष्म। आर्य्य! सत्यं विज्ञापयामि तैस्तैरुपायैर्वत्सौ कुशलवौ उत्प्रेक्षे ( ड )।

एतौ हि जन्मसिद्धास्त्रौ जातौ प्राचेतसान्मुनेः।
वीरौ सम्प्राप्तसंस्कारौ वयसा द्वादशाब्दिकौ ॥ १५ ॥

राम:। वत्स इति परिप्लवमानहृदयः सन् मुग्धोऽस्मि (ढ)।

पृथ्वी। एहि वत्से! पवित्रीकुरु रसातलम्।

राम:। हा प्रिये! लोकान्तरमसि गता।

सीता। णेदु मं अत्तणो अङ्गेसुं विलयं अम्बा, ण सक्कह्मि ईदिसं जीअलोअपरिवत्तं अणुभविदुम् ( १४ )।

राम:। किमुत्तरं स्यात्।

पृथ्वी। त्याग स्तन्यस्य यावन्मन्नियोगतः पुत्रकयोरपेक्षस्व, परेण ते यथा रोचिष्यते ( ण )।

---

( १४ ) नयतु मामात्मनोऽङ्गेषु विलयमम्बा, न शक्नोमि ईदृशं जीवलोकपरिवर्त्तमनुभवितुम्। परिवर्त्तम् अवस्थान्तरम्।

---

तथा तद्वत् प्राचेतसो वाल्मीकिरपि रघूणां रघुवंशीयानां जनकानां जनकवंशीयानाञ्च वंशयोः कुलयोः गुरुः संस्कर्त्ता।

( ड ) तैस्तैः तादृशैः उपायैः लक्षणैः त्वदधिगतशास्त्रप्रागल्भ्यादिभिः वाल्मीकेरधिगतविनयाचारसुसंस्कृतार्षज्ञानादिभिश्चेत्यर्थः उपलक्षितौ।

( १५ ) जन्मत एव सिद्धानि अधिकृतानि अस्त्राणि ययोः तौ तथोक्तौ, वयसा द्वादश द्वाधिकैः दशभिः पूर्णैः अब्दैः वयःसंख्यकवत्सरस्तं प्राप्तौ द्वादशाब्दिकौ एतौ वीरौ प्राचेतसात् वाल्मीकेर्मुनेर्हि सम्प्राप्तसंस्कारौ लब्धसंस्कारौ। अतः सीतापुत्रावेवैतावित्यनुमन्ये इत्यर्थः।

( ढ ) इति अस्माद्धेतोः परिप्लवमानं सन्देहसागरतरङ्गोपरि दोलायमानमिव अतिशयेनाकुलमित्यर्थः हृदयं यस्य तथोक्तः सन् मुग्धोऽस्मि। मत्पुत्रावेतौ न वेति संशयारूढचित्त इति यावत्।

भागी । एवं नाम ।

ततो निष्क्रान्ता गङ्गापृथ्वीसीताः ।

रामः । कथं विलय एव वैदेह्याः सम्पन्नः, हा देवि ! दण्डकारण्यवासप्रियसखि ! हा चारित्रदेवते ! लोकान्तरं पर्य्यवसितासि ( त )। [ इति मुह्यति । ]

लक्ष्म । भगवन् वाल्मीके ! परित्रायस्व, एष ते काव्यार्थः (थ) ।

[नेपथ्ये ।] अपनीयतामातोद्यकं, भो भोः सजङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः ! पश्यत, महर्षिणा भगवता वाल्मीकिना अनुज्ञातं पवित्रमाश्चर्य्यम् ( द ) ।

लक्ष्म । विलोक्य ।

मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तञ्च देवर्षिभिरन्तरीक्षम् ।
आश्चर्य्यमार्य्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुदेति ॥ १६ ॥

[पुनर्नेपथ्ये ।] अरुन्धति ! जगद्वन्द्ये ! गङ्गापृथ्व्यौ भजस्व नौ ।

---

( ण ) स्तन्यस्य स्तनदुग्धस्य त्यागस्येत्यर्थः त्यागस्तं यावत् त्यागपर्य्यन्तमित्यर्थः । यावत् योगे द्वितीया ते तुभ्यं ते इत्यत्र यस्मै दित्सासूया रुचीत्यादिना चतुर्थी ।

( त ) पर्य्यवसितासि प्रस्थितासि ।

( थ ) रामस्यैतादृशावस्थोत्पादनं जनानां दुःखजननञ्च ते काव्यप्रयोजनम् ।

( द ) आतोद्यकं वाद्यादि अभिनयादिक्रियासाधनम् । अपनीयताम् अपसार्य्यतां रङ्गव्यापाराद् विरम्यतामित्यर्थः । अनुज्ञातम् अनुज्ञया सम्पद्यमानं पवित्रं दोषरहितं शुद्धिकारकम् आश्चर्य्यं परतः प्रकाश्यमानमद्भुतं वृत्तान्तम् ।

( १६ ) गाङ्गं गङ्गासम्बन्धि अम्भः जलं मन्थादिव पर्वतादिना विलोड़नादिव क्षुभ्यति इतस्ततः उद्वेलति । अन्तरीक्षं गगनञ्च देवर्षिभिर्व्याप्तम् । तद्दर्शनार्थं सर्वे देवास्तत्र आगता इत्यर्थः । आश्चर्य्यं देवताभ्यां गङ्गामहीभ्यां सह आर्य्या सीता सलिलात् गङ्गासलिलात् उदेति उद्गच्छति । इन्द्रवज्रावृत्तम् ।

( १७ ) हे जगतां वन्द्ये ! पूज्ये ! अरुन्धति ! नौ आवां गङ्गा च पृथ्वी च ते

अर्पितेयं तवाभ्यासे सीता पुण्यव्रता वधूः ॥ १७ ॥

लक्ष्म। दिष्ट्या आश्चर्य्यमाश्चर्य्यम्। आर्य्य! पश्य पश्य कष्टमद्यापि नोच्छ्वसिति आर्य्यः।

ततः प्रविशति अरुन्धती सीता च।

अरु। त्वरस्व वत्से वैदेहि! मुञ्च शालीनशीलताम्।

एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना ॥ १८ ॥

सीता। [ससम्भ्रमं स्पृशन्ती।] समस्ससिदु अज्जउत्तो(१५)।

राम:। [समाश्वस्य सानन्दम्।] भोः किमेतत्। [दृष्ट्वा सहर्षाद्भुतम्।] कथं देवी। [सलज्जस्मितम्।] अम्बा अरुन्धती सर्वे च प्रहृष्यन्त ऋष्यशृङ्गशान्तासमेता गुरवः।

अरु। वत्स! एषा भगीरथगृहदेवता सुप्रसन्ना गङ्गा।

[नेपथ्ये।] जगत्पते रामभद्र! स्मर्य्यतामालेख्यदर्शने मां प्रत्यात्मनो वचनम्। यथा, सा त्वमम्ब धर्मतः स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भवेति, तत्रानृण्यास्मि जाता।

अरु। इयन्ते श्वश्रूर्भगवती वसुन्धरा।

[नेपथ्ये।] उक्तञ्च पूर्वमायुष्मता वत्सत्यागे, यथा भगवति वसुन्धरे! श्लाघ्यां दुहितरमवेक्षस्व जानकीमिति, तदधुना कृतवचनास्मि प्रभोर्वत्सस्येति (घ)।

---

(१५) समाश्वसितु आर्य्यपुत्रः।

---

गङ्गापृथ्व्यौ भजस्व विशेषेण जानीहि। इयं पुण्यव्रता वधूः सीता अभ्यासे समीपे अर्पिता।

(१८) हे वत्से वैदेहि सीते! त्वरस्व त्वरां कुरु, शालीनशीलतां लज्जां मुञ्च त्यज, एहि आगच्छ, प्रियस्पर्शेन पाणिना करेण मे वत्सं रामं जीवय सचैतन्यं कुरु।

(घ) वत्सत्यागे सीतापरित्यागकाले। कृतं प्रतिपालितं वचनं त्वदनुरोधरूपं यया सा तथोक्ता। पतित्वात् जामातृत्वाच्च प्रभोर्वत्सस्य चेति पदद्वयम्।

रामः। कथं कृतमहापराधो भगवतीभ्यामनुकम्पितः, प्रणमामि वः।

अरु। भो भोः पौरजानपदाः! भगवतीभ्यां जाह्नवीवसुन्धराभ्यामेवं प्रशस्यमाना ममारुन्धत्याः समर्पिता, पूर्वञ्च भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा, सब्रह्मकैश्च देवैः संस्तुता सावित्रकुलवधूर्देवयजनसम्भवा सीतादेवी परित्यज्यतामिति कथं भवन्तो मन्यन्ते (न)।

लक्ष्म। एवमार्य्ययारुन्धत्या निर्भर्त्सिताः प्रजाः कृत्स्नश्च भूतग्राम आर्य्यां नमस्करोति, लोकपालाश्च सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते (प)।

अरु। जगत्पते रामचन्द्र!

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम्।
हिरण्मय्याः प्रतिकृतेः पुण्यप्रकृतिमध्वरे॥ १८॥

सीता। [स्वगतम्।] जाणादि अज्जउत्तो सीदादुक्खं पमज्जिदुं (१६)।

---

(न) वैश्वानरेण अग्निना। निर्णीतं पुण्यं चरित्रमेव चारित्रं यस्याः सा। संस्तुता प्रशंसिता। कथं भवन्तो मन्यन्ते किं भवतां मतं भवति।

(प) भूतग्रामः प्राणिवर्गः लोकपालाः इन्द्रादयः ते च "इन्द्रो वह्निः पितृपतिः नैरृतो वरुणो मरुत्। कुवेर ईशः पतयः पूर्वादीनां दिशां क्रमादित्यमरः। सप्तर्षयः मरीच्यादयः। ते च "मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः। वशिष्ठश्च तथा सप्त ऋषयः परिकीर्त्तिता इति। उपतिष्ठन्ते सम्भावयन्ति। उपपूर्वस्थाधातोरुपासनार्थे आत्मनेपदं भवति।

(१८) त्वं हिरण्मय्याः हिरण्यनिर्म्मितायाः प्रतिकृतेः प्रतिमूर्त्तेः पुण्या न शिल्पादेः परिहीनसत्त्वविज्ञानादिगठिता अनुकृतिरपितु तस्याः आदर्शभूता (आसव) प्रकृतिः स्वभावसम्पन्ना मूर्त्तिः तां धर्मचारिणीं सहधर्मिणीं यथाधर्मं धर्मानुसारेण अध्वरे यज्ञे उपस्थिते अश्वमेधे इत्यर्थः नियोजय प्रतिष्ठापय। तया सह अश्वमेधं सम्पादयेत्यर्थः।

रामः। यथा भगवती आदिशति।

लक्ष्म। कृतार्थोऽस्मि।

सीता। जीविदम्हि (१७)।

लक्ष्म। आर्य्ये! एष निर्लज्जो लक्ष्मणः प्रणमति (फ)।

सीता। वच्छ! ईदिसोवि चिरं जीव (१८)।

अरु। भगवन् वाल्मीके! उपनीयेतामिमौ सीतागर्भसम्भूतौ रामभद्रस्य पुत्रकौ कुशलवौ। [इति निष्क्रान्ता (ब)]।

रामलक्ष्मणौ। [दृष्ट्वा।] तथैव तत्।

सीता। [सबाष्पाकुला।] कहिं ते पुत्तका मे (१९)।

ततः प्रविशति वाल्मीकिः कुशलवौ च।

वाल्मी। वत्सौ कुशलौ! एष रघुपतिः पिता युवयोः लक्ष्मणः कनिष्ठतातः, सीतादेवी जननी, एष राजर्षिर्जनको मातामहः।

सीता। [सहर्षकरुणाद्भुतं विलोक्य।] कहं तादो (२०)।

कुशलवौ। हा तात! हा अम्ब! हा मातामह!

रामलक्ष्मणौ। [सहर्षमालिङ्ग्य।] ननु वत्सौ! पुण्यैःप्राप्तौ स्थः।

---

(१६) जानाति आर्य्यपुत्रः सीतादुःखं प्रमार्जयितुम्।

(१७) जीवितास्मि।

(१८) वत्स! ईदृशोऽपि चिरं जीव। ईदृशोऽपि आर्य्यपुत्राज्ञया मां विवासयन्नपि।

(१९) कुत्र तौ पुत्रकौ मे।

(२०) कथं तातः।

---

(फ) निर्लज्जः त्वद्विवासनरूपनिष्ठुरकार्य्यकारित्वात् उचिता या लज्जा तया हीन इत्यर्थः।

(ब) उपनीयेतां रामसमीपमानीयेताम्।

सीता । एहि जाद कुश ! एहि जाद लव ! चिरस्स परिस्सजध पुणो जम्मन्तरगदं जणणिं ( २१ ) ।

कुमारौ । [ तथा कृत्वा । ] धन्यौ स्वः ।

सीता । भअवं ! प्पणमामि ( २२ ) ।

वाल्मी । वत्से ! ईदृश्येव चिरं भूयाः ( भ ) ।

सीता । अम्महे तादो, कुलगुरू, अज्जाजणो, सभत्तुआ अज्जा सन्तादेई, सलक्खणा सुप्पसण्णा अज्जउत्तचलणा समं कुसलवावि दीसन्ति, ता णिब्भरम्हि आणन्देण ( २३ ) ।

[ नेपथ्ये । कलकलः । ]

वाल्मी । [ उत्थायावलोक्य च । ] उपहृतलवणो मधुरेश्वरः प्राप्तः ( म ) ।

लक्ष्म । सानुषङ्गाणि कल्याणानि ( य ) ।

रामः । सर्वमिदमनुभवन्नपि न प्रत्येमि यद्वा प्रकृतिरियमभ्युदयानाम् ( र ) ।

---

( २१ ) एहि जात कुश ! एहि जात लव ! चिरस्य परिष्वजेथां जन्मान्तरगतां जननीम् ।

( २२ ) भगवन् ! प्रणमामि ।

( २३ ) आश्चर्य्यं ! तातः, कुलगुरुः, आर्य्याजनः, सभर्त्तृकार्य्या शान्तादेवी, सलक्ष्मणाः सुप्रसन्ना आर्य्यपुत्त्रचरणाः समं कुशलवावपि दृश्यन्ते, तन्निर्भरास्मि आनन्देन ।

तातो जनकः, कुलगुरुर्वशिष्ठः, आर्य्याजनः कौशल्या, सभर्त्तृका ऋष्यशृङ्गसहिता । निर्भरा परिपूर्णा ।

---

( भ ) स्वामिपुत्त्रसहिता ।

( म ) उपहृतो विनाशितो लवणो तदाख्यराक्षसो येन स तथोक्तः । मधुर अधुना मथुरेति प्रसिद्धा नगरी तस्या ईश्वरः राजा शत्रुघ्न इत्यर्थः ।

( य ) सानुषङ्गाणि सानुवृत्तीनि, कल्याणान्तरजनकानीत्यर्थः । सम्पत् सम्पदमनुबध्नाति विपच्च विपदमिति प्रसिद्धार्थः ।

( र ) सर्वमिदं पुत्राभ्यां सह सीतायाः प्राप्तिः वशिष्ठवाल्मीकिजनकादीनां

वाल्मी । रामभद्र ! उच्यतां, किन्ते भूयः प्रियमुपकरोमि ।

रामः । अतः परमपि प्रियमस्ति । तथापीदमस्तु ।

पाप्मभ्यश्च पुनातु वर्द्धयतु च श्रेयांसि सेयं कथा
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च ।
तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् ॥ २१ ॥

इति निष्क्रान्ताः सर्वे ।

इति सम्मेलनं नाम सप्तमोऽङ्कः ।

समाप्तमिदं महाकविभवभूतिविरचितमुत्तरराम-
चरितं नाम नाटकम् ।

---

कालुष्याच्च प्रसादः सवणवधानन्तरं प्रत्युत्तसमागमः इत्यादि सर्वमेतत् अनुभवन्नपि पश्यन् स्वप्नमपि न प्रत्येमि सत्यतया न विश्वसिमि मन्दभाग्यस्य मम एतत् सर्वमसम्भवमिति भावः । यद्वा अथवा अभ्युदयानां कल्याणसम्पदाम् अयं प्रकृतिः स्वभावः । भूरिकल्याणसम्पत् एवं स्वप्नवदप्रत्ययास्पदं भवति एवेति भावः ।

( २१ ) जगती माता सर्वभूतधात्री निखिललोकपालयित्री मही च तथा गङ्गेव भागीरथीव मङ्गल्या कल्याणजननी मनोहरा च सुखदा च सा इयं रामचरितरूपा कथा प्रबन्धः पाप्मभ्यश्च पृथ्वीभागीरथीवत् पापेभ्यः पुनातु पवित्रीकरोतु श्रेयांसि मङ्गलानि च वर्द्धयतु । असेविता सती कथं सा श्रेयांसि विदधातु इत्यत आह तामेतामिति । बुधाः पण्डिताः शब्दरूपब्रह्माणं वेत्ति यस्तस्य परिणता परिपाकं गता भ्रमचापल्यादिदोषरहितेत्यर्थः प्रज्ञा बुद्धिर्यस्य तस्य तथोक्तस्य कवेर्वाल्मीकेस्तामेतां रामायणरूपाम् अधुना अभिनयैः अवस्थाद्यनुकरणैर्विन्यस्तरूपां प्रदर्शितप्रकाराम् इमां मद्रचितां वाणीं रामचरितरूपां परिभावयन्तु समालोचनया संवर्द्धयन्तु । भगवद्वाल्मीकिविरचितरामायणानुगतत्वात् मत्कृतनाटकमपि लोके सुखकरं समादरणीयञ्च भवतु इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
सुखबोधिनी टीका समाप्ता ।

92-9-9200

# UTTARA RAMA CHARITA

A DRAMA

BY

BHAVABHUTI.

2°

Edited and Published with a Commentary

BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent Free Sanskrit College.*

THIRD EDITION.



CALCUTTA

PRINTED AT THE SIDDHESWARA PRESS.

1895.

To be had from Pandit Jibananda Vidyasagara B. A.
Superintendent Free Sanskrit College, Calcutta.

## एतानि मुद्रितसंस्कृतपुस्तकानि ।

| | |
|---|---|
| १ [illegible]बोध व्याकरणम् | २ |
| २ अष्टकम् पाणिनीयम् | ॥० |
| ३ उणादिसूत्रम् सटीक | २ |
| ४ कविकल्पद्रुम (धातुपाः) | ।० |
| ५ कलापव्याकरणं वा कातन्त्र | २ |
| ६ धातुरूपादर्शः | १॥० |
| ७ परिभाषेन्दुशेखर सटीक | १ |
| ८ मुग्धबोधव्याकरणम् सटीक | १॥० |
| ९ वाक्यमञ्जरी (वङ्गाक्षरैः) | ।० |
| १० वैयाकरणभूषणसार | ॥।० |
| ११ लघुकौमुदीव्याकरणम् | ॥० |
| १२ लिङ्गानुशासनं सटीक | ।० |
| १३ शब्दरूपादर्शः | ॥० |
| १४ शब्दार्थरत्नम् | ॥।० |
| १५ सारस्वतव्याकरण सटीक पूर्वार्द्धम् | १ |
| १६ सारस्वतव्याकरणं सटीक उत्तरार्द्धं | २ |
| १७ सिद्धान्तकौमुदी सरलासहिता | १० |
| १८ ऋतुसंहार काव्य सटीक | ।/ |
| १९ काव्यसंग्रह मूलमात्र | ५ |
| २० काव्यसंग्रह सटीक प्रथमभागः | ३ |
| २१ काव्यसंग्रह सटीक द्वितीयभागः | २ |
| २२ काव्यसंग्रह सटीक तृतीयभागः | २ |
| २३ किरातार्जुनीयकाव्य सटीक | १॥० |
| २४ कुमारसम्भवकाव्यपूर्वखण्ड सटीक | ॥० |
| २५ कुमारसम्भवकाव्य उत्तरखण्डसटीक | ॥ |
| २६ गीतगोविन्द काव्य सटीक | ॥० |
| २७ चन्द्रशेखरचम्पू काव्य | ३ |
| २८ नलोदय काव्य सटीक | ।/ |
| २९ नैषधचरितम् काव्य सम्पूर्ण सटीक | ५ |
| ३० नैषधकाव्य नवमसर्गपर्यन्त सटीक | २॥ |
| ३१ पुष्पबाणविलास काव्य सटीक | ॥० |
| ३२ विद्वन्मोदतरङ्गिणी (चम्पू काव्य) | ॥० |
| ३३ भट्टिकाव्य टीकाद्वयसहित | २ |
| ३४ भामिनीविलासकाव्य सटीक | ॥० |
| ३५ भामिनीविलास संचित्रटीकाद्वय | |
| ३६ चम्पूरामायणम् सटीक | |
| ३७ (चम्पूरामायणम्) भोजचम्पू | ॥ |
| ३८ शतकावलिः | ॥ |
| ३९ माधवचम्पू काव्य | । |
| ४० मेघदूत मल्लिनाथकृत टीकासहित | |
| ४१ मेघदूत सटीक सुलभमूल्यकम् | / |
| ४२ रघुवंश काव्य सटीक | १॥ |
| ४३ रघुवंश मूलमात्र ७,८,१२ सर्गाः | / |
| ४४ राजप्रशस्ति सटीक | |
| ४५ शिशुपालवधकाव्य सटीक (माघ) | |
| ४६ गद्यकथासरित्सागर सम्पूर्ण | |
| ४७ कादम्बरी विस्तृतव्याख्यासहिता | |
| ४८ दशकुमारचरितगद्यकाव्य सटीक | १ |
| ४९ द्वात्रिंशत्पुत्तलिकासिंहासन | १ |
| ५० पञ्चतन्त्रम् विष्णुशर्मकृत सटीक | १ |
| ५१ बहुविवाहवाद | । |
| ५२ वासवदत्ता गद्यकाव्य सटीक | १ |
| ५३ वेतालपञ्चविंशतिः (सरलगद्य) | ॥ |
| ५४ शङ्करविजय | १॥० |
| ५५ भोजप्रबन्ध सरल गद्य | ॥० |
| ५६ हर्षचरित सटीक बाणभट्टकृत | २॥० |
| ५७ हर्षचरितबाणभट्टकृतगद्य | १ |
| ५८ संस्कृतशिक्षामञ्जरी प्रथमभागः | / |
| ६९ संस्कृतशिक्षामञ्जरी द्वितीयभागः | ।० |
| ६० संस्कृतशिक्षामञ्जरी तृतीयभागः | ॥० |
| ६१ संस्कृतशिक्षामञ्जरी चतुर्थभागः | ।० |
| ६२ हितोपदेश सटीक | ॥० |
| ६३ अमरकोष | ॥० |
| ६४ वाचस्पत्यम् (बृहदभिधान) | १०० |
| ६५ मेदिनीकोष | २ |
| ६६ शब्दस्तोममहानिधिः | ८ |
| ६७ अनर्घराघवनाटक सटीक [मुरारि] | २ |
| ६८ अनर्घराघवनाटक मूलमात्र | १ |

६९ उत्तररामचरितनाटक सटीक १
७० कर्पूरमञ्जरीनाटिका सटीक ॥०
७१ चण्डकौशिकनाटक सटीक ॥०
७२ चैतन्यचन्द्रोदयनाटक सटीक २
७३ धनञ्जयविजयनाटक सटीक ।०
७४ नागानन्दनाटक सटीक ॥०
७५ नागानन्दनाटक मूल ।०
७६ प्रबोधचन्द्रोदयनाटक सटीक १
७७ प्रसन्नराघवनाटक जयदेवकृत १
७८ प्रियदर्शिका नाटिका सटीक ॥०
७९ वसन्ततिलक भाण नाटक ।/
८० बालरामायणनाटक सटीक २
८१ विक्रमोर्वशी नाटक (सटीक) १
८२ विद्धशालभञ्जिकानाटिका सटीक ॥।०
८३ वेणीसंहारनाटक सटीक ॥।०
८४ मल्लिकामारुतनाटक सटीक २
८५ महानाटक हनुमन्नाटक सटीक १॥
८६ महानाटकम् (हनुमन्नाटकम्) ॥०
८७ महावीरचरितनाटक सटीक १॥०
८८ महावीरचरितनाटक मूलमात्र ॥०
८९ मालतीमाधवनाटक सटीक ॥०
९० मालविकाग्निमित्रनाटक सटीक १
९१ मुद्राराक्षसनाटक सटीक १
९२ मृच्छकटिकनाटक सटीक १॥०
९३ रत्नावलीनाटिका सटीक ॥०
९४ शकुन्तलानाटक सटीक १
९५ काव्यप्रकाश अलङ्कार सटीक ४
९६ काव्यादर्श सटीक (अलङ्कार) १
९७ काव्यदीपिका अलङ्कार सटीक ॥।०
९८ कुवलयानन्द अलङ्कार सटीक २
९९ चन्द्रालोक प्राचीन अलङ्कार ।०
१०० दशरूपकम् ( अलङ्कार ) १
१०१ साहित्यदर्पण सटीक अलङ्कार १॥
१०२ साहित्यदर्पणम् ( मूलमात्र ) ॥।०

१०३ काव्यालङ्कारसूत्रवृत्तिवामनकृत ॥०
१०४ वाग्भटालङ्कार ।०
१०५ सरस्वतीकण्ठाभरण सटीक २
१०६ सङ्गीतपारिजात[सङ्गीतशास्त्र]१॥०
१०७ छन्दोमञ्जरी वृत्तरत्नाकर सटीक ॥
१०८ श्रुतबोध: (छन्दोग्रन्थ) टीका /
१०९ पिङ्गलछन्द: शास्त्र वृत्तिसहित १॥
११० महानिर्वाणतन्त्रम् सटीक ४
१११ शारदातिलक तन्त्रम् २
११२ मन्त्रमहोदधि तन्त्र सटीक २
११३ रुद्रयामल तन्त्र २
११४ इन्द्रजालविद्यासंग्रह: २
११५ कामन्दकी नीतिसार: ॥।०
११६ चाणक्यशतकम् सटीक /
११७ शुक्रनीतिसार: सटीक २
११८ गयाश्राद्धादिपद्धति: १
११९ तुलादानादिपद्धति: (बङ्गाक्षरै:) ३
१२० धर्मशास्त्रसंग्रह: १०
१२१ वीरमित्रोदय (स्मृतिशास्त्र) ५
१२२ मनुसंहिता कुल्लूकभट्टकृत टीका-सहित २
१२३ वेदान्तदर्शन सभाष्य सटीक ६
१२४ भामती(वेदान्त)वाचस्पतिमिश्रकृत३
१२५ वेदान्तपरिभाषा ॥०
१२६ वेदान्तसार सटीक ॥०
१२७ विवेकचूडामणि वेदान्त ।/
१२८ पञ्चदशी (सटीक) वेदान्त १॥०
१२९ सिद्धान्तबिन्दुसार: (वेदान्त) ॥०
१३० पूर्णप्रज्ञदर्शनम् सभाष्य ॥।०
१३१ साङ्ख्यदर्शन ( भाष्यसहित ) २
१३२ सांख्यसूत्र अनिरुद्धवृत्तिसहित ॥०
१३३ साङ्ख्यसार ।०
१३४ सांख्यतत्त्वकौमुदी सटीक २
१३५ सांख्यकारिका गौड़पादभाष्य ॥०

१३६ मीमांसादर्शनम् भाष्यसहित १२
१३७ मीमांसापरिभाषा ।०
१३८ शाण्डिल्यसूत्र सभाष्य ॥०
१३९ जैमिनीय (न्यायमालाविस्तर:) ६
१४० अर्थसंग्रह (लौगाक्षिमीमांसा) ।०
१४१ न्यायदर्शन सभाष्य सवृत्ति २॥०
१४२ भाषापरिच्छेद: मुक्तावली ॥०
१४३ भाषापरिच्छेदमुक्तावली दिनकरी १॥
१४४ शब्दशक्तिप्रकाशिका ( न्याय ) ॥०
१४५ कुसुमाञ्जलि सटीक (न्याय) ।०
१४६ उपमानचिन्तामणि: ॥
१४७ आत्मतत्त्वविवेक (बौद्धाधिकार) २
१४८ अनुमानचिन्तामणि: सटीक ४॥
१४९ तर्कामृत (जगदीशकृत) न्याय ।०
१५० तर्कसंग्रह इं अनुवादसहित ॥०
१५१ पातञ्जलदर्शन (सभाष्य सटीक) २
१५२ पातञ्जलदर्शन भोजवृत्तिसहित १
१५३ वैशेषिकदर्शनम् सटीक ३
१५४ सर्वदर्शनसंग्रह: [दर्शनशास्त्र] १
१५५ आथर्वणोपनिषद् सभाष्य ३
१५६ आरण्यसंहिता सभाष्य ॥०
१५७ ईश केन कठ प्रश्न मुण्ड माण्डूक्य
उपनिषद् (सटीक सभाष्य) ३
१५८ गायत्री व्याख्या ॥०
१५९ गोपथब्राह्मण (अथर्ववेदस्य) १
१६० छान्दोग्य उपनिषद् सटीक सभाष्य३
१६१ तैत्तिरीय ऐतरेय श्वेताश्वतर सभाष्य२
१६२ दैवत तथा षड्विंशब्राह्मणसभाष्य२
१६३ निरुक्त सभाष्य सटीक १२
१६४ नृसिंहतापनी सभाष्य २
१६५ वृहदारण्यक सटीक सभाष्य ७
१६६ मुक्तिकोपनिषत् ॥
१६७ शुक्लयजुर्वेदसंहिता सभाष्य ४
१६८ शुक्लयजुर्वेदस्य प्रातिशाख्य
सभाष्य
१६९ सामवेदसंहिता सभाष्य
१७० अग्निपुराणम्
१७१ अध्यात्मरामायणम् सटीक
१७२ कल्किपुराणम्
१७३ गरुड़पुराणम्
१७४ सटीक वाल्मीकिरामायण
बालकाण्डम्
१७५ विष्णुपुराणम् सटीक
१७६ ब्रह्मवैवर्त्तपुराण सम्पूर्ण
१७७ मत्स्यपुराणम्
१७८ मार्कण्डेयपुराणम्
१७९ लिङ्गपुराणम्
१८० श्रीमद्भगवद्गीता सभाष्य सटी
१८१ अष्टाङ्गहृदय (वाग्भट) वैद्यक
१८२ चक्रदत्त (वैद्यक)
१८३ चरकसंहिता (वैद्यक) सम्पू
१८४ माधवनिदान सटीक
१८५ भावप्रकाश (वैद्यक)
१८६ मदनपालनिर्घण्टु: (वैद्यक)
१८७ रसेन्द्रचिन्तामणितयारसरत्ना
१८८ शार्ङ्गधरसंहिता ( वैद्यक )
१८९ सुश्रुतसंहिता सटीक (वैद्यक
१९० सुश्रुतसंहिता मूलमात्र (वैद्य
१९१ चिकित्सासारसंग्रह वङ्गसेन
१९२ गणिताध्याय: भास्कराचार्य
१९३ गोलाध्याय: भास्कराचार्यकृ
१९४ वृहत्संहिता वा वाराहीसंहि
१९५ भावकुतूहल ( ज्योतिष )
१९६ लीलावती भास्कराचार्यरचित
१९७ वीजगणित भास्कराचार्यरचित
१९८ सूर्य्यसिद्धान्त सटीक

कलिकाता संस्कृतविद्यामन्दिरे बि, ए, उपाधिधारिण:
श्रीजीवानन्दविद्यासागर-भट्टाचार्यस्य सकाशात् लभ्यन्ते ।